# JUNIOR CHANDAMAMA

## is 2 years old this month




### Here's a special ANNIVERSARY offer!

Pay only Rs. 120 (for 12 issues) and save Rs. 24




**Offer closes on May 31, 2005**

If you are a subscriber, you can avail of the concession for a GIFT Subscription

---

## SUBSCRIPTION FOR JUNIOR CHANDAMAMA

☐ Please enrol me as a new subscriber for **Junior Chandamama** in English

☐ I am a subscriber( Subscription No: ......................); I would like to take out a GIFT Subscription.

My name / My friend's name : ......................................................................

Home address : ......................................................................

...................................................................... PIN CODE : ..............................

I am enclosing DD / M.O. Receipt No. .............................. issued by ..............................

P. O. for Rs 120.00




**ATTACH THIS LABEL ON THE FIRST COPY** *Signature*

---

**This is a GIFT copy with love from** ......................................................................

...................................................................... **Town / City** ......................................................................

# ज्ञायतां गुहाविषये

**गुहाः नाम काः इति किं भवन्तः जानन्ति ?**

**ताः पर्वतादिभूमिषु निर्मिताः भवन्ति । एकैकस्य पुरुषस्य सञ्चारादिनिमित्तं पर्याप्ताः भवन्ति ताः प्रायः ।**

आगच्छन्तु, आन्ध्रप्रदेशस्य कर्नूल्जनपदे स्थितानां बेलुंगुहानां परिचयं प्राप्नुयाम । भारते स्थितासु गुहासु अतिदीर्घाः एताः । अत्र गुहानां सरणिः एव अस्ति । एषा गुहासरणिः प्रायः त्रिकिलोमीटर्दीर्घा स्यात् । तत्र द्विकिलोमीटर्दीर्घः प्रदेशः इदानीं दर्शनयोग्यः सञ्चारयोग्यः च अस्ति ।



बेलुंगुहाः दीर्घाकारिकाः । यदि एतासां प्रवेशः क्रियते तर्हि किञ्चिद्दूरं गमनानन्तरं विशालं प्राङ्गणं प्राप्यते । तत्र निर्मलजलस्य उत्सः दृश्यते । गुहाभित्तितः नलिकाकारात् चापि जलं स्रवत् दृश्यते । प्राङ्गणतले वल्मीकः अपि दृश्यते । जलस्थः अङ्गाराम्ल-वायुः सुधाशिलासु यदा विलीनः भवति तदा फेनाकारतां प्राप्तवत् जलं बिन्दुरूपेण गुहाछदितः पतति । एतैः जलबिन्दुभिः सह खनिजांशाः अपि यदा युक्ताः भवन्ति तदा हिमनलिकाः निर्मिताः भवन्ति । तादृश्यः हिमनलिकाः छदिषु लम्बन्ते । ताभ्यः पतिताः जलबिन्दवः लघुशिखराकारतां प्राप्य प्राङ्गणे दृश्यन्ते ।

आन्ध्रप्रदेशीयया प्रवासोद्यमसंस्थया बेलुंगुहाः दर्शनीयस्थलत्वेन सज्जीकृताः सन्ति । तया गुहासु स्थितान् पङ्कान् अपनीय गमनागमनाय मार्गं प्रकल्प्य स्वच्छतादिकं कृत्वा गुहानां दर्शनीयता कल्पिता अस्ति । गुहायाः अन्तर्भागे क्वचित् यत्र वायुः अल्पप्रमाणेन वाति तत्र शुद्धवायुप्रसारणव्यवस्था अपि उपकल्पिता अस्ति । वायुप्रसारकयन्त्राणि एतत् कार्यं समर्थतया निर्वहन्ति ।

एतासां गुहानां प्रवेशाय सोपानपङ्क्तिव्यवस्था अपि उपकल्पिता अस्ति । एतस्याः गुहासरण्याः प्रथमं प्राङ्गणं निर्दिश्यते सिंहद्वारम् इति । अत्र रमणीयः कश्चन जलाशयः, उत्सः, जलपातः च दृश्यते । गुहायां स्थितेषु प्राङ्गणेषु एतदेव विशालतमम् । एतस्याः औन्नत्यं नवमीटरात्मकम् अस्ति ।

अग्रिमम् अपरं प्राङ्गणम् उच्यते *मण्डपम्* इति । अत्र विशालं सभाङ्गणम् अस्ति । छदौ हिमनलिकाः लम्बमानाः दृश्यन्ते । ततोऽपि अग्रे गतं चेत् तृतीयं प्राङ्गणं प्राप्यते, यस्य च नाम अस्ति *पातालगङ्गा* इति । अत्र लघुः जलपातः दृष्टिगोचरतां याति । एतस्याः गुहासरण्याः केषुचित् स्थलेषु विंशतिमीटरौन्नत्यम् दृश्यते । गुहायाम् आन्तं काचित् जलधारा प्रवहति । एषा जलधारा गुहायाः शोभां वर्धितवती अस्ति ।

इतोऽपि अग्रे गतं चेत् अपरं प्राङ्गणं प्राप्यते, यत्र असङ्ख्याः हिमनलिकाः लम्बमानाः दृश्यन्ते । एतत् प्राङ्गणम् उच्यते कोटिलिङ्गम् इति । असङ्ख्याः हिमनलिकाः अधोमुखतया स्थापितानि *लिङ्गानि* इव दृश्यन्ते । अतः कोटिलिङ्गम् इति एतस्य नाम । एतस्य परिसरस्य दर्शनात् भासते यत् हिमालयः एव अत्र अधोमुखतया स्थापितः इति । एताः हिमनलिकाः विविधैः वर्णैः शोभन्ते अपि । अत्र कारणं - तासु स्थितः खनिजांशः ।

# बेलुंगुहाः

## आन्तर्भौमाश्चर्यम् आविष्क्रियताम्

कोट्यधिकवर्षपुरातनाः एताः गुहाः आधुनिकजगतः कृते परिचायिताः आंग्लेयेन भूगर्भशास्त्रज्ञेन राबर्ट्ब्रूस् फुट्वर्येण । एषा घटना १८८४ तमे वर्षे प्रवृत्ता । ततः शतवर्षाणाम् अनन्तरं, तन्नाम १९८२-१९८३ तमवर्षयोः मध्यकाले जर्मनीयस्य डेनियल् गेबौर्नामकस्य नायकत्वेन युक्तः कश्चन गुहान्वेषकगणः बेलुंगुहायाः स्वरूपं समग्रतया व्यवृणोत् । गुहानां भौगोलिक-पुरातत्त्वादिस्वरूपाणां वैज्ञानिकाध्ययनाय एव गुहान्वेषणशास्त्रं विकासितम् अस्ति एषु दिनेषु । १९९९ तमे वर्षे आन्ध्रप्रदेशीयया प्रवासोद्यमसंस्थया (ए.पि.टि.डि.सि.) एतासां गुहानां निर्वहणाधिकारं स्वायत्तीकुर्वत्या दर्शनीयस्थानत्वं परिकल्पितम् ।



**स्मरन्तु - अवश्यं द्रष्टव्येषु अन्यतमाः सन्ति बेलुंगुहाः । ताः प्राकृतिकवैचित्र्यस्य असदृशानि उदाहरणानि सन्ति । एताः गुहाः प्रति विद्यालयच्छात्राणां प्रवासाय आन्ध्रप्रदेशीया प्रवासोद्यम-संस्था मार्गदर्शनं यानव्यवस्थां च कर्तुम् अर्हति ।**

**प्राप्तिमार्गः** - एताः बेलुंग्रामसमीपे सन्ति । स च ग्रामः कर्नूल्जनपदे कोलिमिगुण्ड्लमण्डले अस्ति । समीपस्थेभ्यः नगरेभ्यः एतत् स्थानं प्रति लोकयानानि आयान्ति । एतत् कर्नूलतः ११० कि.मि., दूरे अस्ति । (बनगनपल्लीमार्गेण गन्तव्यम् ।) नन्द्यालतः ६० कि.मि., दूरे, ताडिपत्रितः ३१ कि.मी., दूरे, अनन्तपुरतः ८४ कि.मी., दूरे, बेङ्गलूरुतः २७० कि.मी., दूरे च अस्ति ।

गुहावीक्षणाय शालाप्रवासस्य आयोजने मार्गदर्शनं वा साहाय्यं करोति आन्ध्रप्रदेशीया प्रवासोद्यमसंस्था (ए.पि.टि.डि.सि.)



aptdc ANDHRA PRADESH TOURISM DEVELOPMENT CORPORATION

*For details please contact:* Punnami Tourist Complex, Venkataramana Colony, **Kurnool**. Telefax:+91 (8518) 250922. **Central Reservation Office:** Shakar Bhavan, Opp. Police Control Room, Hyderabad. Phone:+ 91 (40) 23298456, 23298457; Fax:+ 91 (40) 23298455 **Information & Reservation Offices: HYDERABAD:** Tank Bund Road, Phone:040-23453036, 23450165. Fax:23453086 • SGM Mall, Mehdipatnam Circle. Ph: 040-23525794, 23525796 • Surya Complex, KPHB Colony. Ph: 040-23052028, 23052038. **SECUNDERABAD:** Yatrinivas, S.P. Road. Ph: 040-27893100, 27816375 **BANGALORE:** 24/1, Race Course Road, Ph:080-51136373 Fax: 22385813 **Divisional Offices: VISAKHAPATNAM:** Srimukh Complex, Dwaraka Nagar, Phone: +91 (891) 5564456 Fax: (891) 2559356 **VIJAYAWADA:** Opp. P.W.D. Grounds, M.G. Road, Phone: +91 (866) 2570791 Fax: (866) 2571500 **TIRUPATI:** 139, T.P. Area, 3rd Choultry, Phone: +91 (877) 2255386 Fax: (877) 2252062




चन्दमामा सम्पुटः - २२ मे - २००५ सञ्चिका - २

## अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः












**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -



**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, CHENNAI - 600 097

E.mail : subscription@chandamama.org



**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १४४/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -

चेन्नै - शिवाजी, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

देहली - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



संस्थापकौ -
चक्रपाणिः, बि.नागिरेड्डिः च

# राष्ट्रनायकेभ्यः सन्तु प्रणामाञ्जलयः

पञ्चसप्ततिवर्षेभ्यः पूर्वम् अस्माकं देशे अपूर्वाः काश्चन घटनाः घटिताः, यासां च परिणामतः अस्माभिः स्वातन्त्र्यं प्राप्तम् । १९३० तमवर्षस्य एप्रिल्मासे षष्ठे दिनाङ्के गान्धिवर्यः लवणनिर्माणनिषेधनियमं भञ्जितवान् । तदर्थं तेन साबरमतीतः ३८० कि.मी.दूरं पादाभ्यां गतम् । एषा 'दाण्डीयात्रा' इति ख्याता । गान्धिवर्येण मातृभूमेः या सेवा कृता तस्याः संस्मरणाय एषु दिनेषु 'दाण्डीयात्रा' प्रवृत्ता ।

दाण्डीयात्रायाः ७५ तमं वर्षं निमित्तीकृत्य दूरदर्शनजनाः गुजरातराज्ये सामान्यैः जनैः कैश्चित् मिलितवन्तः । बहवः युवकाः गान्धिवर्यस्य विचारेण सहमताः न आसन् । ते अपृच्छन् - 'किम् एतस्मिन् २१ तमे अपि शतके अहिंसा अनुसरणार्हा भवितुम् अर्हति ?' इति ।

षष्टेः वर्षेभ्यः पूर्वं गान्धिवर्यस्य इहलोकयात्रा समाप्ता । एतस्मिन् अल्पे एव कालावधौ देशः किं तं व्यस्मरत् ? यदि अस्माभिः प्रबलस्य राष्ट्रस्य निर्माणं करणीयम् अस्ति तर्हि राष्ट्रार्थं त्यागं कृतवन्तः महात्मानः न विस्मर्तव्याः । भाविन्यां युवजनतायां राष्ट्राभिमानस्य निर्माणं विशेषतः शिक्षकैः करणीयम् अस्ति । चारित्र्य-वर्धनविषये समूहमाध्यमस्यापि विशिष्टं पात्रम् अस्ति एव ।

उज्ज्वलायाः परम्परायाः निर्माणाय त्यागं कृतवतां विस्मरणं शोभावहं सर्वथा न । देशस्य स्वातन्त्र्यार्थम् आत्मसमर्पणं कृतवतां विषये महती श्रद्धा कृतज्ञताभावः च अस्मासु स्यादेव । तादृशेभ्यः सर्वेभ्यः सन्तु अस्माकं प्रणामाञ्जलयः ।

*सम्पादकः* - **विश्वम्**





वाचकानां कृते कथास्पर्धा (अक्टोबर्) - विजिता शीर्षिका

# बहूनां दोषाणां श्रवणात् अपि एकस्य श्रवणं वरम्



''सर्वथा न शक्यते'' इति उक्तवान् शङ्करः ।

''किमर्थम् एवम् ?'' इति राजा अपृच्छत् ।

तदा शङ्करः स्पष्टोक्त्या उक्तवान् - ''महाराज ! सः एतावता एव बहूनां विषये निन्दावचनानि उक्तवान् इति श्रूयते । स्वस्य भगिनीं तोषयितुं सः भवद्विषये अपि निन्दा-वचनानि उक्तवान् इति श्रुतं मया । एतस्मात् स्पष्टं यत् अन्येषु दोषस्य आरोपणं भवतः श्यालस्य प्रवृत्तिः इति । यः भवन्तम् एव निन्दति सः किं मां न निन्देत् ? अवश्यं निन्देत् एव । एतादृशानां निन्दनशीलानां सहवासम् अहं न इच्छामि ।''

क्षणं विरम्य सः पुनः उक्तवान् - ''यदि तस्य निमित्तम् अहं पाकं न कुर्यां तर्हि मया एकम् एव निन्दनं श्रोतव्यं भवेत् यत् शङ्करः राज्ञः श्यालस्य निमितं पाकस्य सज्जीकरणं निराकृतवान् इति । किन्तु यदि पाकं कुर्यां तर्हि मया निर्मितेषु सर्वेषु अपि पाकेषु दोषान् आरोपयेत् एव भवतः श्यालः । अतः बहूनां दोषाणां श्रवणात् अपि एकस्य एव दोषस्य श्रवणं वरम् इति भावयामि अहम्'' इति ।

शङ्करस्य अभिप्रायगर्भम् उत्तरं श्रुत्वा महाराजः नितरां सन्तुष्टः । शङ्करः वेतनप्राप्त्युद्देशेन पाकं न करोति, अपि तु आत्मसन्तोषाय पाकं करोति इति सः अवगतवान् । अतः सः श्यालस्य निमित्तं पाकः करणीयः एव इति अनुरोधं न कृतवान् । प्रत्युत शतं रजतमुद्राः पारितोषिकरूपेण दत्तवान् । तस्मात् शङ्करः तुष्टिं प्राप्तवान् ।

**कृष्णकुमारपालः S/o जवाहरप्रसादपालः**

पाल-कान-नाक-गला-हास्पिटल्, सिङ्घानामार्गः

नारनौल्, **हरियाणा** - १२३ ००१



# साहसी युवकः

राजा विजयेन्द्रः सिन्धुनदप्रदेशे स्थितस्य महेन्द्रपुरनामकस्य राज्यस्य शासकः आसीत् । तस्य देशस्य उत्तरभागे पर्वतेषु वसन्तः हूणाः नाम केचन तदा तदा तस्य देशस्य उपरि आक्रमणं कुर्वन्ति स्म ।

अतः महेन्द्रपुरे सैनिकानाम् आवश्यकता महती आसीत् । ये साहसिनः, पराक्रमशीलाः, राज्यरक्षणकार्ये बद्धादराः च, तान् एव सैन्ये योजयितुम् इच्छति स्म राजा । नियुक्तितः पूर्वं प्रधानमन्त्री तेषां परीक्षां करोति स्म ।

कदाचित् विंशतिवर्षीयः कश्चन तरुणः राजदर्शनार्थम् आगतः । तस्य हावभावादिकं दृष्ट्वा परिहासभावेन रक्षकभटाः अपृच्छन् - "महाराजसमीपे भवतः किं कार्यम् ?" इति ।

रक्षकभटाः किमर्थं परिहासं कुर्वन्तः सन्ति इति अवगतवान् सः युवकः क्रोधेन अवदत् - "मम श्मश्रु एकत्र दीर्घम् अपरत्र लघु च अस्ति इत्यतः भवन्तः एवं परिहसन्तः सन्ति खलु ? एतस्य पृष्ठभूमिकायां काचित् साहसपूर्णा कथा अस्ति" इति ।

तदा रक्षकभटाः उच्चैः हसन्तः अवदन् - " मित्र ! का सा कथा अपूर्वा ?" इति ।

युवकः एकेन हस्तेन खड्गं गृहीत्वा अपरेण हस्तेन श्मश्रु स्पृशन् अवदत् - "अहं सर्वान् एतं विषयं वक्तुं न इच्छामि । तं श्रोतुम् अर्हति राजा प्रधानमन्त्री वा । अतः अग्रे गमनाय अनुज्ञा दीयताम्" इति ।

एतत् श्रुत्वा रक्षकभटाः स्तब्धाः जाताः । ते एकं रक्षकभटं प्रेषयित्वा मन्त्रिणं प्रति वार्तां प्रेषितवन्तः । मन्त्री तं स्वसमीपम् आनायितवान् ।

युवकः प्रधानमन्त्रिणं पश्यन् धैर्येण एव अपृच्छत् - "किं भवान् एव प्रधानमन्त्री ?" इति ।

"आम् । अहमेव प्रधानमान्त्री अस्मि । भवतः नाम किम् ? किन्निमित्तम् अत्र आगतं भवता ?" इति अपृच्छत् प्रधानमन्त्री ।

तदा युवकः शिरः अवनमय्य तं प्रणम्य

अवदत् – "महामन्त्रिवर्य ! मम नाम नरसिंहवर्मा इति । महाराजः साहसशीलान् युवकान् सेनायां योजयितुम् इच्छति इति श्रूयते । शत्रूणां हूणानां सम्मुखीकरणे समर्थाः तेन इष्यन्ते इति मया श्रुतम् । तदर्थम् एव अहम् आगतः" इति ।

"भवान् तु सैनिकत्वेन उद्योगं प्राप्य हूणान् सम्मुखीकर्तुम् इच्छति । किन्तु भवतः विलक्षणं श्मश्रु शत्रुषु अपि हासं जनयेत् खलु" इति मन्दहासपूर्वकम् अवदत् राजा ।

"मम श्मश्रु एवं दृश्यते यत् तस्य एकं विशिष्टं कारणम् अस्ति" इति अवदत् नरसिंहवर्मा ।

"तत् सङ्क्षेपेण वदतु तावात्" इति अवदत् मन्त्री ।

तदा नरसिंहवर्मा अवदत् – "अहं परम-देशभक्तः अस्मि । मम शरीरस्य कणे कणे अपि देशभक्तिः प्रवहति । अतः प्राणापायम् अपि अविगणयन् अहं शत्रुशिबिरं प्रविष्टवान् । तत्र सेनापतिः व्याघ्रचर्मासने भल्लूक-चर्म प्रसार्य उपविष्टवान् आसीत् । तम् उभयतः खड्गधारिणः शूलहस्ताः च सैनिकाः आसन् । 'किमर्थम् आगतम् ?' इति सः मां क्रोधन अपृच्छत् । 'भवतः दर्शनात् मम सन्देहः यत् भवान् भल्लूकः शृगालः वा स्यात् इति । अस्माकं राज्यम् आक्रान्तुम् इच्छतः भवतः कियत् धैर्यम् ?' इति मया अपि क्रोधेन प्रति-प्रश्नः कृतः । तदा मम संहारम् आदिष्टवान् सः । कश्चन सैनिकः मां लक्ष्यीकृत्य स्वस्य खड्गं क्षिप्तवान् । अहं किञ्चित् अपसृतवान् । तस्मात् मम प्राणाः तु रक्षिताः । किन्तु श्मश्रुणः अर्धभागः कर्तितः जातः । अहं ततः झटिति पलायितवान् । मां ग्रहीतुं शत्रु-सैनिकैः कृतः प्रयासः व्यर्थः जातः" इति ।

"एतत्सर्वं कदा प्रवृत्तम् ?" इति अपृच्छत् मन्त्री ।

"न एषा प्राचीना कथा । पञ्चदशभ्यः निमेषेभ्यः पूर्वं प्रवृत्ता घटना एषा" इति अवदत् नरसिंहवर्मा ।

तदा उच्चैः हसन् मन्त्री – "भवान् अर्हः अस्ति न सैनिकः भवितुम्, अपि तु विदूषकः भवितुम् । आगच्छतु मया सह । अहं भवन्तम् अस्माकम् आस्थानविदूषकं कारयिष्यामि" इति वदन् नरसिंहवर्मणा सह राजसमीपं प्रस्थितवान् ।





# धैर्ये साहसे च लक्ष्मीः

यथापूर्वं रात्रेः भोजनस्य अनन्तरं सर्वे बालाः पितामहीम् अभितः उपविष्टाः कथां श्रोतुम् । पितामही कथां वक्तुम् उद्युक्ता । तावता नागराजनामकः सूर्यं दर्शयन् पितामहीम् अवदत् - ''एषः शालासमयात् पूर्वमेव गृहम् आगतः । अस्य कारणं भवती जानाति किम् ? कोऽपि सुन्दरनामकस्य बालकस्य लेखनीं चोरितवान् । सुन्दरः अध्यापकम् उक्तवान् - 'मम लेखनी नष्टा' इति । तदा अध्यापकः सर्वेषां बालकानां स्यूतान् परिशीलयितुम् आज्ञापितवान् । एषः सूर्यः स्वस्यूते हस्तं यदा स्थापितवान् तदा लेखनीसदृशं किञ्चन वस्तु हस्ते लग्नम् । भीतः सन् एषः शालातः पलायितवान् । गोपीनामकः बालः सुन्दरस्य लेखनीं चोरयित्वा अस्य स्यूते स्थापितवान् आसीत् इति श्रूयते'' इति ।

पितामही सूर्यं पश्यन्ती उक्तवती - ''वत्स, सूर्य ! भवता लेखनी न स्वीकृता । तथापि किमर्थं ततः धावितम् ?'' इति

तदा सूर्यः उक्तवान् - ''पितामहि ! मम भयम् आसीत् यत् सर्वे मामेव चोरं भावयेयुः इति'' इति ।

''बुद्धिमतां नीतिवाक्यम् अस्ति यत् धैर्ये साहसे च निवसति लक्ष्मीः इति । एतं विषयम् एव अद्यतनकथायां श्रावयिष्यामि । श्रद्धया शृण्वन्तु'' इति कथयन्ती पितामही कथायाः आरम्भं कृतवती ।

पुरा प्रवृत्ता घटना एषा । श्रीधरः विमलः चेति उभौ छात्रौ गुरुकुले पठन्तौ आस्ताम् । तौ न महाबुद्धिमन्तौ । किन्तु विनयशीलता तु तयोः विशेषः आसीत् । अतः गुरुः तयोः बहुधा प्रीतिमान् आसीत् ।

तयोः विद्याभ्यासस्य समाप्तिः यदा जाता तदा तौ गुरुकुलात् प्रस्थितौ । तौ उद्दिश्य गुरुः अवदत् - ''पुत्रौ ! पूर्वं कदाचित् कस्यचन महाराजस्य महती कष्टपरम्परा आपतिता । तस्य सर्वस्वमपि नष्टम् । बहुकालपर्यन्तं याः



अष्टौ लक्ष्म्यः तेन सह अवसन् ताः इदानीं क्रमशः तं त्यक्त्वा गन्तुम् उद्युक्ताः ।

धनलक्ष्मीः, धान्यलक्ष्मीः, विजयलक्ष्मीः इत्यादयः सप्त लक्ष्म्यः अपि महाराजं त्यक्त्वा गताः । अनेन महाराजः न खिन्नः । किन्तु यदा अन्ते धैर्यलक्ष्मीः अपि तं त्यक्तुं सिद्धा तदा तां महाराजः अवदत् - 'अम्ब ! अन्याः मां त्यक्त्वा गताः । तेन अहं न निर्विण्णः । किन्तु भवतीं विना अहं स्थातुम् अशक्तः । भवती एका मया सह तिष्ठति चेत् पर्याप्तम् । अहं विश्वसिमि यत् भवत्याः अनुग्रहः यदि मयि भविष्यति तर्हि इतः पूर्वं गतं सर्वमपि अहं पुनः प्राप्नुयाम् इति' इति ।

राज्ञः एतेन वचनेन धैर्यलक्ष्म्याः हृदयं दयापूर्णम् अभवत् । सा राजानम् आश्वासयन्ती उक्तवती - 'पुत्र ! अहं सर्वदा भवता सह निवत्स्यामि' इति । धैर्यलक्ष्म्याः साहाय्येन सः महाराजः प्रणष्टं सर्वमपि पुनः प्राप्तवान् । अतः एव प्राज्ञाः कथयन्ति यत् धैर्ये साहसे च लक्ष्मीः प्रतिवसति इति ।

मनुष्येण विपदि धैर्यम् आश्रयणीयम् । अतः भवन्तौ उभौ अपि कष्टमय्यां परिस्थितौ अपि धैर्यं न त्यजेताम् । एवं चेत् अग्रे भवतोः भविष्यं सुन्दरं भविष्यति'' इति तौ आशिषा अनुगृह्य प्रेषितवान् । श्रीधरः विमलः च गुरोः आशिषं प्राप्य सन्तुष्टौ सन्तौ गुरुकुलात् राजधानीं प्रति प्रस्थितौ ।

राजधान्याः सीमा यावत् प्राप्ता तावता सर्वत्र तमः प्रसृतम् आसीत् । किञ्चिद्दूरम् अग्रे गताभ्यां ताभ्यां काचन धर्मशाला प्राप्ता । धर्मशालायां वसतिं भोजनं च तौ प्राप्तवन्तौ । तदर्थं धर्मशालायाः स्वामी ताभ्याम् एकैकं सुवर्णनाणकं स्वीकृतवान् ।

मध्यरात्रसमयः । तदा धर्मशालायाम् महान् कोलाहलः अकस्मात् उत्पन्नः । श्रीधरः विमलः च निद्रातः उत्थितौ । श्रीधरः पार्श्वे स्थितं कञ्चन पृष्टवान् - ''किम् अभवत् ? कोलाहलस्य कारणं किम् ?'' इति ।

''राज्ञः अन्तःपुरे चौर्यं कृतवान् कश्चन चोरः अत्र आगतः इति वार्ता । अतः राजभटाः सर्वान् विचारयन्तः सन्ति'' इति उक्तवान् सः ।

'अस्मिन् विषये आवयोः तु भयं किमपि नास्ति' इति विचिन्त्य तौ निश्चिन्तौ जातौ । क्षणाभ्यन्तरे सैनिकाः सर्वत्र परिशीलनं कुर्वन्तः श्रीधरस्य स्यूतम् अपि परिशीलितवन्तः । तत्र नवरत्नखचितं कण्ठहारद्वयं ते लब्धवन्तः ।



एतत् दृष्ट्वा श्रीधरः विमलः च नितराम् आश्चर्यचकितौ जातौ ।

सैनिकाः उभावपि निगृह्य उक्तवन्तौ - ''एतत् कण्ठहारद्वयम् अपि महाराज्ञ्याः । हारद्वयम् अपि भवतोः स्यूते आसीत् इत्यतः स्पष्टं यत् भवन्तौ एव चोरौ इति । अन्ये कति जनाः भवत्समूहे सन्ति ? वदताम्'' इति ।

एतत् श्रुत्वा तौ उभावपि नितरां भीतौ । श्रीधरः एव धैर्यं धरन् उक्तवान् - ''आवां न चोरौ । निद्रायां मग्नस्य मम स्यूते चोरः एतत् आभरणं स्थापितवान् स्यात्'' इति ।

किन्तु सैनिकाः तस्य वचनम् अङ्गीकर्तुं न सिद्धाः । अतः तौ उभावपि ताडयितुम् उद्युक्ताः ते । विमलः तेभ्यः सैनिकेभ्यः कथमपि विमुक्तः सन् ततः पलायनं कृतवान् । सैनिकाः श्रीधरस्य बन्धनं कृत्वा राज्ञः सम्मुखं तं नीतवन्तः ।

राजा यशोवत्सिंह महाप्राज्ञः आसीत् । अतः सः श्रीधरेण उक्तं सर्वमपि शान्तचित्ततया श्रुत्वा उक्तवान् - ''भवतः कथनं सत्यम् इत्येव चिन्तयाम । तथापि कश्चन प्रश्नः अत्र उदेति यत् यदि भवन्तौ निरपराधौ तर्हि भवतः सखा किमर्थं पलायितवान् इति । एतस्य उत्तरं किं भवतः ?'' इति ।

राज्ञः प्रश्नस्य उत्तरं यच्छन् श्रीधरः गुरुकुलात् प्रस्थानसमये गुरोः उपदेशं सविस्तरं श्रावयित्वा उक्तवान् - ''महाराज, ममापि बन्धनं स्यात् इति मम सुहृत् भीतः स्यात् । तदर्थमेव सः पलायितवान् । स तु निर्दोषी एव । अहमपि शपथं कृत्वा वदामि यत् यदि भवान् मां बन्धनात् विमुक्तं करिष्यति तर्हि येन वस्तुतः चौर्यं कृतं, तं चोरम् अन्विष्य अहं भवदधीनं करिष्यामि । मया सह यङ्कमपि प्रेषयितुम् अपि अर्हति भवान्'' इति ।

राजा श्रीधरस्य वचने विश्वस्य तस्य विचारम् अङ्गीकृतवान् । अतः तेन उक्तम् - ''अस्तु ! आसायं भवान् निवसतु अत्र । ततः मदीयः कश्चन भवता सह आगमिष्यति'' इति ।

सायं शेखरनामकः कश्चन श्रीधरेण सह गन्तुं सिद्धः सन् आगतः । श्रीधरः तेन सह गच्छन् स्वसन्देहं प्रकटितवान् - ''यस्यां धर्मशालायाम् आवां वासं कृतवन्तौ तस्याः स्वामिनः विषये एव मम सन्देहः । सः एव चोराणां साहाय्यं कुर्वन् तेभ्यः धनमपि स्वीकृतवान् स्यात्'' इति । ततः सः स्वेन चिन्तितम् उपायं शेखरम् उक्तवान् ।

ततः उभावपि विपणिं गत्वा कानिचन वस्तूनि क्रीतवन्तौ । तैः वस्तुभिः सह तामेव धर्मशालां गत्वा प्रकोष्ठं भाटकार्थं स्वीकृत्य तत्र उषितवन्तौ । श्रीधरः वेषपरिवर्तनं कृतवान् आसीत् इति कारणात् धर्मशालास्वामी तस्य परिचयं न प्राप्तवान् । उभौ अपि स्यूते स्थितानि कृतकानि आभरणानि निष्कास्य वणिजौ इव व्यवहरतः स्म ।

रात्रेः भोजनस्य अनन्तरं श्रीधरशेखरौ गाढनिद्रायां मग्नौ इव सुप्तवन्तौ । मध्यरात्र-समयः । धर्मशालायां नूतनजनानाम् आगमनेन कोलाहलः श्रुतः । धर्मशालायाः स्वामी क्षीणस्वरेण वार्तालापं कुर्वन् दृष्टः श्रीधर-शेखराभ्याम् । तस्मात् तौ ज्ञातवन्तौ यत् आवयोः विषयम् आगतान् वदन् अस्ति एषः इति । ततः तौ निश्चिन्तौ सन्तौ निद्रायां लीनौ जातौ । प्रातः उत्थाय तौ ततः प्रस्थितौ ।

धर्मशाला राज्यस्य सीमायाम् आसीत् इति कारणात् तत्र जनसञ्चारः विरलः एव । श्रीधरः शेखरश्च किञ्चिद्दूरं गतौ । तावता त्रयः चोराः तौ आक्रान्तवन्तः ।

एवं भवेत् इति ऊहा उभयोरपि आसीत् इति कारणात् तावपि तान् प्रतिरोद्धुं सिद्धौ एव । तौ मुष्ट्योः स्थितं मरीचिकाचूर्णं तेषां चोराणां मुखेषु प्रक्षिप्तवन्तौ । अनन्तरक्षणे स प्रदेशः चोराणां हाहाकाररवेण पूर्णः । श्रीधरः झटिति स्यूते स्थितां रज्जुं निष्कास्य शेखरस्य साहाय्येन तान् चोरान् बद्धवान् ।

ततः धर्मशालास्वामिनमपि बद्ध्वा तमपि चोरैः सह राज्ञः समीपं तौ नीतवन्तौ । राजा तेभ्यः कठिनकारागृहवासं विहितवान् ।

एवं पितामही कथां समाप्य हसन्ती उक्तवती - ''बालाः ! साहसी श्रीधरः कीदृशं जयं लब्धवान् इति ज्ञातवन्तः खलु भवन्तः ? श्रीधरेण सह आगतः शेखरः नान्यः, अपि तु स्वयं युवराजः एव । ततः परं शेखरः पितुः समीपे श्रीधरस्य बुद्धिमत्तां बहुधा प्रशंस्य तं स्वस्य आप्तसहायकत्वेन नियोजितवान् । पलायितं विमलम् अन्विष्य राजसभाम् आनायितवान् । इदानीं वदन्तु - अनया कथया कीदृशी नीतिः प्राप्ता भवद्भिः ?'' इति ।

सर्वे बालाः करताडनं कुर्वन्तः उच्चैः उक्तवन्तः - ''धैर्ये साहसे च लक्ष्मीः प्रति-वसति'' इति ।





# भल्लूकमान्त्रिकः

## १७

*[कालीवर्मभल्लूकमान्त्रिकयोः आत्मानं रक्षित्वा मायामर्कटः मन्त्रदण्डसहिततया नगरं गतवान् । राजभवनस्य पुरतः भल्लूकः मायामर्कटम् आक्रान्तवान् । तस्मिन् समये तत्र उपस्थितः रक्षकभटप्रमुखः मायामर्कटं भल्लूकेन ग्राहयित्वा राज्ञः समीपं नीतवान् । तदनन्तरम् ...]*

राजभवनस्य सोपानानां समीपे स्थित्वा अनुसृत्य आगच्छतः जनान् रक्षकभट-प्रमुखः आज्ञापयत् खड्गम् उन्नीय - 'सर्वे तिष्ठन्तु' इति । ततः सः भल्लूकस्वामिनम् अवदत् - ''भोः, महाराजः सभाभवने अस्ति इति भासते । राज्ञः आस्थानं प्रति भवतः विकृताकारस्य भल्लूकस्य नयनं न उचितम् । तस्य स्कन्धे यः दुष्टः मर्कटः अस्ति तं भवान् उन्नयतु, माम् एव अनुसरन् राज्ञः समीपम् आगच्छतु च'' इति ।

रक्षकभटप्रमुखस्य वचनं श्रुत्वा कुपितः सन् भल्लूकस्वामी - ''स्वस्य निन्दनम् अपि कदाचित् अहं सहेय, किन्तु मम भल्लूकस्य अपमाननं न । कियन्तः राजानः, सामन्ताः, पण्डिताः च तस्य प्रशंसां कृतवन्तः ! एतस्य पूर्वजः कश्चित् सेतुबन्धकाले रामस्य साहाय्यम् अपि कृतवान् आसीत् । एतस्य प्रमाणम् अस्ति एतत् तालपत्रम्'' इति उक्त्वा स्वस्य कोषतः एकं तालपत्रं निष्कासितवान् ।

एतत् श्रुत्वा उच्चैः हसन् रक्षकभटप्रमुखः



अवदत् - ''यदि एषा वंशवृक्षावली राजपुरोहिताय दर्श्येत तर्हि कोऽपि पुरस्कारः वा प्राप्येत । आदौ तं मर्कटवेषधारिणं गुप्तचरं स्कन्धात् अवतारयतु तावत्'' इति ।

भल्लूकप्रमुखः अनिच्छया एव भल्लूकसमीपं गत्वा तं पृष्ठभागे स्पृशन् - ''मित्र ! एतं मर्कटं भूमौ स्थापयतु तावत्'' इति उक्त्वा मायामर्कटस्य कटौ बद्धां रज्जुम् आकृष्टवान् ।

भल्लूकः यावत् मायामर्कटं गृहीत्वा अवतारणाय प्रयत्नम् आरब्धवान् तावता मायामर्कटः कीचुकुर्वन् अधः उत्प्लुत्य अवदत् - ''श्रूयताम् अत्र । भल्लूकमान्त्रिकः भवतां राज्ञः महतीं हानिं कल्पयिष्यति । भवतां राजा कुत्र ? मम मन्त्रदण्डः क्व गतः ?'' इति ।

तस्य वचनं श्रुत्वा तत्रत्याः सर्वे उच्चैः हसितवन्तः । कश्चन भटः दीर्घं दण्डम् आनीय तस्मै यच्छन् अवदत् - ''एषोऽस्ति भवतः मन्त्रदण्डः । यत् कौशलं दर्शयितुम् इष्यते तत् दर्श्यताम्'' इति ।

मायामर्कटः तस्य हस्तात् तं दण्डं स्वीकृत्य ऊर्ध्वाग्रतया भूमौ स्थापितवान् । उत्प्लुत्य तस्य अग्रभागे तिष्ठन् - ''अये मूर्ख ! एतादृशम् अपूर्वं सामर्थ्यं किं कोऽपि अन्यः दर्शयितुम् अर्हेत् ? भवतां राजा अपायगर्ते अस्ति, राज्यं च विपत्तिग्रस्तम् अस्ति । अपायघण्टावादनं स्पष्टतया श्रूयते । तथापि भवन्तः तु मायाविद्यादर्शनोत्सुकाः दृश्यन्ते ! अहो, कीदृशाः मूर्खाः अधमाः भवन्तः !'' इति अतर्जयत् ।

रक्षकभटप्रमुखः मायामर्कटस्य समीपम् आगत्य दण्डाग्रे स्थितं तम् अवदत् - ''किं भवान् शत्रुपक्षीयः गुप्तचरः न ? भल्लूकमान्त्रिकस्य आक्रमणं जायमानम् अस्ति इति यत् भवता पौनःपुन्येन उच्यते तत् किं सत्यम् ?'' इति ।

मायामर्कटः झटिति अधः आगत्य रक्षकभटप्रमुखस्य हस्तात् खड्गम् आकृष्य स्वीकृत्य स्वस्य कटौ बद्धां रज्जुं छित्त्वा क्रोधमिश्रितेन स्वरेण - ''अयि मूर्खाः । अहं कीदृशः शक्तिशाली इति किम् अवगतं भवद्भिः ? मम सामर्थ्यम् अवगतं खलु ? भवतां राजा अविलम्बेन अत्र मम समीपम् आनीयताम्'' इति आज्ञापितवान् ।

रक्षकभटप्रमुखादयः सर्वे मायामर्कटस्य कठोरस्वरोपेताम् आज्ञां श्रुत्वा भीत्या क्षणकालं स्तब्धाः । एतावता मायामर्कटः खड्गं चालयन् रक्षकभटसमीपम् आगत्य अपृच्छत् - ''अये, किं भवता मम आज्ञा न श्रुता ?'' इति ।

तदा रक्षकभटप्रमुखः भयेन कम्पमानः

अवदत् - ''महाराजः आस्थाने अस्ति । सः कथमत्र आनेतुं शक्येत ? अहं किमपि वदामि चेत् सः मम शिरश्छेदं कारयेत्'' इति ।

''एवं तर्हि अहम् एव तस्य समीपं गच्छामि । मम मार्गात् अपसरतु तावत्'' इति अवदत् मायामर्कटः ।

तदा रक्षकभटप्रमुखः प्रतिवचनं किमपि अवदन् सोपानानि आरोढुम् उद्युक्तः । मायामर्कटः तम् अनुसृतवान् । जनाः तु दूरे एव स्थितवन्तः । अग्रे गमनाय तेषां धैर्यं न आसीत् ।

आस्थाने राजा जितकेतुः प्रमुखैः सह सम्भाषणे मग्नः आसीत् । तस्मिन् एव काले रक्षकभटप्रमुखः राज्ञः समीपम् आगत्य भीतिमिश्रितेन स्वरेण - ''महाराज ! क्षन्तव्यः अहम् । मम पृष्ठतः एव खड्गहस्ततया यः आगच्छन् अस्ति सः मर्कटरूपी जनः महाशक्तिशाली अस्ति । या विपत् आगता अस्ति तां विस्तरेण ज्ञापयितुं सः अत्र उपस्थितः अस्ति'' इति अवदत् ।

राजा जितकेतुः, सभायाम् उपस्थिताः अन्ये च मायामर्कटं दृष्ट्वा आश्चर्यचकिताः जाताः । तस्य विलक्षणं वेषं दृष्टवतां सर्वेषां मुखात् महान् हासः निर्गतः ।

राजा जितकेतुः पार्श्वे एव स्थितान् मन्त्रिणः उद्दिश्य - ''यदि इदानीं प्रधानमन्त्री जीवगुप्तः अभविष्यत् तर्हि महान्तम् आनन्दम् अनुभूतवान् स्यात्'' इति उक्त्वा रक्षकभटप्रमुखम् उद्दिश्य गम्भीरेण स्वरेण - ''अये भीरो ! कस्यचित् सामान्यस्य मर्कटस्य निमित्तं न केवलं नगरद्वारम् उद्घाटितम्, अपि तु सः सादरम्



अत्र आनीतः अपि भवता ! यदि शत्रुसैनिकाः एव दुर्गद्वारसमीपे उपस्थिताः स्युः तर्हि न जाने, भवान् किम् अकरिष्यत् इति । कृतस्य अपराधस्य निमित्तम् अहं भवतः शिरश्छेदम् आज्ञापयन् अस्मि । नगरस्य प्रमुखः भटः धीरसेनः वने मम आज्ञां श्वः क्रियान्वितां करिष्यति'' इति अवदत् ।

राज्ञः आज्ञां स्वागतीकुर्वन्तः सर्वे करताडनं कृतवन्तः । तदा मायामर्कटः राजानं सभासदः च सकृत् दृष्ट्वा उच्चस्वरेण अवदत् - ''जय ! तान्त्रिकगुरुवर्य !'' इति ।

ततः सः राजानं जितकेतुं सभासदः च सम्बोध्य अवदत् - ''भवन्तः सावधानाः सन्तः मम वचनं शृण्वन्तु । अहं शरीरेण मर्कटः इव दृश्ये, तथापि अहं सामान्यः मर्कटः न, अपि तु महातान्त्रिकस्य प्रधानशिष्यः अस्मि । मम नाम भ्रान्तमतिः इति । कालीवर्मा



नाम कश्चन महाशूरः, भल्लूकमान्त्रिकः नाम कश्चन मान्त्रिकश्रेष्ठः च आक्रमणाय अत्र आगच्छन्तौ स्तः । एतां वार्तां निवेद्य भवतः सर्वान् सावधानान् कर्तुम् अहम् उपस्थितः अस्मि'' इति ।

मायामर्कटस्य कथनस्य श्रवणात् सभायां कोलाहलः उत्पन्नः । राजा क्षणकालम् आश्चर्येण स्तब्धः । सः सिंहासनात् अवतीर्य मायामर्कटम् अवदत् - ''भवतः कथनात् अवगम्यते यत् भवान् सामान्यः वानरः न इति । भवान् यस्य कालीवर्मणः विषयं वदति तस्य बन्धनाय मया मम प्रधानमन्त्री जीवगुप्तः, केचन सैनिकाः च प्रेषिताः सन्ति । ते एतावता कार्यं साधितवन्तः स्युः अपि'' इति ।

तदा मायामर्कटः उच्चैः हसन् अवदत् - ''तान् सर्वान् सः कालीवर्मा स्वस्य खड्गेन, भल्लूकमान्त्रिकः स्वस्य मन्त्रदण्डेन च निगृहीतवन्तौ स्तः'' इति ।

तावता तेन मन्त्रदण्डः स्मृतः । सः इतस्ततः पश्यन् अवदत् - ''अहो, मम मन्त्रदण्डः क्व गतः ?'' इति । ततः वानरः इव कूर्दन् रक्षकभटप्रमुखस्य समीपं गत्वा तं कण्ठे गृहीतवान् ।

रक्षकभटप्रमुखः मायामर्कटस्य ग्रहणात् आत्मानं मोचयितुं प्रयासं कुर्वन् - ''मर्कटप्रभो ! मन्त्रदण्डस्य विषये अहं किमपि न जानामि सर्वथा'' इति उक्त्वा राजानं दैन्येन प्रार्थयत् - ''महाराज ! एषोऽहम् इदानीं भवता रक्षणीयः'' इति ।

सभायाम् उपस्थिताः द्वित्राः बलशालिनः अग्रे गत्वा मायामर्कटस्य हस्तौ कटिं च गृहीत्वा बलात् आकृष्य तस्य ग्रहणात् रक्षकभटप्रमुखं मोचयित्वा अवदन् - ''भोः, एतस्मिन् देशे प्रजानां प्राणहरणस्य अधिकारः महाराजमात्रस्य अस्ति । अविवेकः अनुचितः । अलम् उद्वेगेन । शान्तेन भूयताम्'' इति ।

मायामर्कटः क्रोधेन दन्तान् परस्परं घट्टयन् - ''राजन्, जितकेतो ! भवान् नगरद्वारस्य पिधानं कारयित्वा निश्चिन्ततया अत्र सिंहासने उपविश्य मनोरञ्जनादिषु प्रवृत्तः अस्ति । एतस्मात् एव कारणात्, नगरात् बहिः किं प्रवर्तते इति न ज्ञायते भवता । भवतः प्रधानवधकः भल्लूकरूपं प्राप्य भल्लूकमान्त्रिकस्य पक्षम् आश्रितवान् अस्ति । कालीवर्मा, कश्चन राक्षसः चापि तस्य पक्षम् आश्रितवन्तौ स्तः । ते सर्वे सम्भूय भवतः नगरम् आक्रान्तुम् उद्युक्ताः सन्ति'' इति अवदत् ।

राक्षसशब्दस्य श्रवणात् राजा जितकेतुः

महान्तम् आश्चर्यम् अनुभवन् - ''राक्षसपदं मया श्रुतम् अस्ति, किन्तु राक्षसः अद्यावधि न दृष्टः'' इति अवदत् ।

तदा मायामर्कटः हसन् अवदत् - ''भवतः सा अपि इच्छा अचिरात् एव पूर्णा भविष्यति । किन्तु तस्य दर्शनस्य अनन्तरं भवतः प्राणाः तिष्ठेयुः उत न इति तु मया न ज्ञायते'' इति ।

राक्षसस्य प्रस्तावात् मन्त्रिणः सर्वे नितरां भीताः । ते जितकेतुम् अवदन् - ''महाराज ! एतस्मात् सङ्कटात् रक्षणं कथम् ?'' इति ।

''राज्ञा सता मया भवतः उद्दिश्य एषः प्रश्नः करणीयः आसीत् । किन्तु स्वयं भीतिं प्रदर्शयन्तः भवन्तः प्रमाणीकृतवन्तः सन्ति यत् वयं मन्त्रिपदे स्थातुम् अनर्हाः इति । यदि प्रधानमन्त्री अत्र स्यात् तर्हि अपायात् रक्षणाय कमपि योग्यं मार्गं प्रादर्शयिष्यत्'' इति उक्त्वा मायामर्कटस्य समीपं गत्वा राजा अपृच्छत् - ''राक्षसः अपि आक्रामकणां पक्षे अस्ति इति तु आघातकरः विषयः । एतस्मात् आत्मनः रक्षणाय किं करणीयम् अस्माभिः ?'' इति ।

कस्यापि मनसि कोऽपि रक्षणोपायः न आसीत् । सर्वे चिन्तयन्तः आसन् यत् शत्रूणाम् आगमनात् पूर्वं कथम् इतः पलायनीयं, कानि कानि वस्तूनि आत्मना सह नेतव्यानि इति ।

सभासदां मुखात् यदा किमपि वचनं न निर्गतं तदा स्वस्य असहायकतां, दुरवस्थां च स्मरन् जितकेतुः मायामर्कटम् अवदत् - ''भवान् यद्यपि मर्कटरूपी अस्ति, तथापि भवान् मम प्रधानमन्त्री इव तीक्ष्णमतिः परिलक्ष्यते । सः राक्षसः एतावता मम प्रधानमन्त्रिणं खादितवान् स्यादपि । अतः अहं



भवन्तं मम देशस्य मुख्यमन्त्रित्वेन नियुक्तवान् अस्मि । एतस्मात् एव क्षणात् भवान् एव मम देशस्य मुख्यः मन्त्री । शत्रुसंहाराय यदि काऽपि योजना स्यात् तर्हि झटिति एव सूचयतु'' इति । ततः सः तस्य हस्तं गृहीत्वा सिंहासनसमीपं नीतवान् ।

सभासदः करताडनपूर्वकं राज्ञः एतं निर्णयं सहर्षं स्वागतीकृतवन्तः । मायामर्कटः खड्गं मुखेन गृहीत्वा हस्तद्वयम् उन्नीय अभयदानं सूचितवान् । सः यावत् किमपि वक्तुं मुखम् उद्घाटितवान् तावता तस्य मुखात् खड्गः पतितः । सः स्वस्य पुच्छं दीर्घतया प्रसार्य तं खड्गं गृहीतवान् । ततः पुनरपि यदा किमपि वक्तुम् उद्युक्तः तावता सभायां कोलाहलः कश्चन श्रुतः । सर्वेषां दृष्टिः तत्र पतिता ।

मन्त्री जीवगुप्तः छिन्नवस्त्रः सन् किरीटं विना सभां प्रविष्टवान् । तस्य पृष्ठतः सामन्तः

सूर्यभूपतिः, उभौ सैनिकौ च आसन् । जीवगुप्तं दृष्ट्वा सभासदः उच्चस्वरेण उक्तवन्तः – ''अस्माकं प्रधानमन्त्री जीवति एव । राक्षसः तं न खादितवान्'' इति ।

तदा मायामर्कटः खड्गम् उन्नीय उच्चस्वरेण अवदत् – ''अयि भोः मूर्खाः । केभ्यश्चित् क्षणेभ्यः पूर्वं राजा मां मुख्यमन्त्रित्वेन नियुक्तवान् अस्ति इति किं भवन्तः विस्मृतवन्तः ? एषः अन्यः कदापि प्रधानमन्त्री भवितुं न अर्हति'' इति ।

ततः सः राजानं जितकेतुं पश्यन् अपृच्छत् – ''राजन् ! भवतः प्रधानमन्त्री कः ? अहम्, उत शत्रुभ्यः पृष्ठं प्रदर्श्य पलाय्य आगतः एषः जीवगुप्तः ?'' इति ।

''मर्कटः एव अस्माकं देशस्य प्रधानमन्त्री । मम निर्णयः अपरिवर्त्यः एव । एषः जीवगुप्तः इतः परम् अन्ये इव सामान्यः कश्चित् मम देशे'' इति उदघोषयत् जितकेतुः ।

एतत् श्रुत्वा क्रुद्धः मन्त्री जीवगुप्तः कोषात् खड्गम् आकृष्य मायामर्कटं क्रोधमिश्रितया दृष्ट्या पश्यन् – ''एषः वराकः मूर्खः कश्चन वानरः किं चन्द्रशिलाराज्यस्य प्रधानमन्त्री भवितुम् अर्हति ? मया पूर्वं कदाचित् राक्षसस्य उग्रदण्डस्य गदातः एषः रक्षितः आसीत् । किन्तु तस्यैव एतस्य शिरः इदानीं मया एव कर्तनीयम् अभवत् यत् तत् तु दौर्भाग्याय एव'' इति वदन् मायामर्कटस्य दिशि गतवान् ।

तदा नितरां क्रुद्धः जितकेतुः अवदत् – ''अयि भोः, जीवगुप्त ! अलम् अविवेकेन । एषः सामान्यः मर्कटः न । भ्रान्तमतिः नाम महामान्त्रिकः अस्ति एषः'' इति ।

''एषः तान्त्रिकः भल्लूकमान्त्रिकस्य मन्त्रदण्डं चोरितवान् अस्ति । सः मन्त्रदण्डः क्व गतः ? तेन विहीनः एषः सामान्यः मर्कटः इव एव । मम खड्गेन एतस्य शिरः पुच्छं च कर्तयिष्यामि'' इति वदन् जीवगुप्तः मायामर्कटसमीपं गतवान् ।

मायामर्कटः 'जय तान्त्रिकगुरुवर्य !' इति घोषयन् स्वस्य प्रसारितेन पुच्छेन जीवगुप्तस्य खड्गं लीलया वशीकृत्य हस्तस्थं स्वस्य खड्गम् उन्नीतवान् ।

– *(अनुवर्तते)*



# वेताल-कथा

## दलपतेः व्यवहारः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! बहूनां वर्षाणाम् अनन्तरं अपि मया भवतः लक्ष्यस्य स्वरूपं, परिश्रमस्य उद्देश्यं च न ज्ञातम् । स्वस्य लाभाय एव यदि भवता एतत्सर्वं क्रियेत तर्हि तत् न्यायसङ्गतं भवेत् । मम तु भाति यत् भवान् अन्यस्य कस्यचित् निमित्तम् एतत् कुर्वन् अस्ति इति । भवतः एषः प्रयासः किं सफलः भवेत् ? मित्र ! भवतः सफलतायै अहं कञ्चित् उपायं वक्तुम् इच्छामि । दलपति- नामकेन युवकेन यत् कृतं तदेव भवता अपि कृतं



चेत् भवतः कार्यं यशस्वि भवेत् । तदर्थं कापट्यं, वाक्चातुर्यं च अत्यावश्यकम् । किम् अधिककथनेन ? दलपतेः कथाम् एव विस्तरेण श्रावयिष्यामि, येन कार्यमार्गः कीदृशः स्यादिति भवान् स्वयम् अवगच्छेत् । तेन मार्गायासपरिहारः अपि भवेत्'' इति ।

अनन्तरं बेतालेन कथा आरब्धा –

लक्ष्मीपुरनामकस्य ग्रामस्य समीपे किञ्चन लघु अरण्यम् आसीत् । जनाः वदन्ति स्म यत् तस्मिन् भूतप्रेतपिशाचादयः वसन्ति इति । काचित् पिशाची हरितवर्णीयां शाटिकां धृत्वा युवतिरूपेण तत्र अटति इति श्रूयते स्म ।

लक्ष्मीपुरात् अनतिदूरे एव कमनीयपुरम् अस्ति । तत्र गजपतिः नाम कश्चन द्यूतव्यसनी निवसति स्म । द्यूतकारणतः तस्य सर्वस्वम् अपि नष्टम् । बहुभ्यः सः ऋणम् अपि स्वीकृतवान् । किन्तु ऋणं प्रत्यर्पयितुं तेन न शक्तम् । तस्मात् सर्वे ऋणदातारः सम्भूय तं सूचितवन्तः यत् अमुकदिनाङ्कात् पूर्वं यदि ऋणं न प्रत्यर्प्येत तर्हि न्यायाधिकारिणम् उक्त्वा कठोरं दण्डनं दापयिष्यते इति । एतस्मात् भीतः गजपतिः लक्ष्मीपुरम् आगतवान् । तत्र केचन उक्तवन्तः यत् अरण्ये सुवर्णम् अस्ति, अन्वेषणात् तत् प्राप्येत इति । अतः गजपतिः अरण्यं गतवान्, बहुधा अटितवान् च । अन्ते श्रान्तः सः कस्यचित् वृक्षस्य अधः उपविष्टवान् । अल्पे एव काले तेन निद्रा प्राप्ता ।

कस्यचित् चीत्कारस्य कारणतः तेन जागरणं प्राप्तम् । सः ध्वनेः दिशि गतवान् । अनतिदूरे एव तेन एकः कुटीरः दृष्टः । तस्य द्वारम् उद्घाटितम् आसीत् । अतः सः अन्तः अगच्छत् । तत्र भूमौ पतितः कश्चन तरुणः तेन दृष्टः । तस्य पार्श्वे काचित् हरितशाटिकाधारिणी तरुणी उपविष्टा आसीत् ।

एतस्मिन् अरण्ये पिशाची अस्ति इति गजपतिः न जानाति स्म । सः तां सुन्दरीं तरुणीं दृष्ट्वा आश्चर्येण अपृच्छत् – ''किम् प्रवृत्तम् अत्र ?'' इति ।

तदा तरुणी अवदत् – ''एषः द्वारसमीपे स्थित्वा जलम् अयाचत् । अन्तः आगम्यताम् इति मया उक्तम् । अन्तः आगतः एषः मां दृष्ट्वा मूर्च्छां गतः'' इति ।

तस्याः कण्ठध्वनिः कठोरः आसीत् । अतः गजपतिः ताम् अपृच्छत् – ''भवत्याः कण्ठध्वनेः श्रवणात् को वा भीतः न भवेत् ?'' इति ।

''युक्तम् उक्तं भवता । बहूनां वर्षाणाम्

अनन्तरं मया सह धैर्येण सम्भाषमाणः भवान् प्राप्तः मया । एतं सचेतनं करोतु भवान् । तावता अहं भवतोः कृते भोजनम् आनेष्यामि'' इति उक्त्वा सा पार्श्वप्रकेष्ठं प्रविष्टवती ।

गजपतिः युवकस्य पार्श्वे उपविश्य तस्य मुखे जलसेचनं कृतवान् । यदा सः मन्दं नेत्रे उन्मीलितवान् तदा गजपतिः अवदत् - ''मित्र ! अलं भीत्या । अहमस्मि अत्र । धैर्येण नेत्रे उन्मीलयतु भवान्'' इति ।

युवकः नेत्रे उन्मील्य क्षीणस्वरेण जलम् अयाचत् । गजपतिः तस्मै पानाय जलं दत्त्वा अवदत् - ''काश्चित् तरुणीं दृष्ट्वा भीतः भवान् मूर्च्छां गतः । एतादृशेन भवता किमर्थम् अरण्यं प्रति आगतम् ?'' इति ।

तस्य युवकस्य नाम अचलपतिः इति । सः अवदत् - ''एषा वस्तुतः न तरुणी, अपि तु पिशाची काचित् । अतः मया भयम् अनुभूतम् । अहं लक्ष्मीपुरस्य निवासी । एतस्मिन् अरण्ये एषा निवसति इति अहं जानामि'' इति ।

तदा गजपतिः आश्चर्येण अपृच्छत् - ''जानता अपि भवता एतत् अरण्यं प्रति किमर्थम् आगतम् ?'' इति ।

''मम माता अकस्मात् अस्वस्था जाता । वैद्येन उक्तम् - 'एषः विलक्षणः रोगः । कृष्णवर्णीयस्य आम्रस्य खादनात् एव एतस्याः रोगः उपशान्तः भवितुम् अर्हति' इति । श्रीपुरे कृष्णवर्णीयानि आम्राणि प्राप्यन्ते इति मया श्रुतम् । श्रीपुरं प्रति तु एतेन अरण्यमार्गेण एव गन्तव्यम् । अतः पिशाच्याः अस्तित्वं जानता अपि मया अत्र आगतम् '' इति अवदत् अचलपतिः ।



''मातुः चिकित्सायै भवता अपूर्वं साहसम् एव कृतम् । नितरां श्लाघ्यः भवान्'' इति तं प्रशंसितवान् गजपतिः ।

''प्रयाणावसरे महती पिपासा प्राप्ता । एतं कुटीरं दूरात् दृष्टवता मया द्वारे स्थित्वा जलं याचितम् । तदा वचनं श्रुतम् - 'अन्तः आगत्य जलं पीयताम्' इति । वृद्धायाः स्वरः इव आसीत् सः । मया अन्तः आगतम् । तदा एषः हरितशाटिकाधारिणी तरुणी मया दृष्टा । एषा पिशाची एव इति मया झटिति अवगतम् । तस्मात् भीत्या मया मूर्च्छा प्राप्ता । कथमपि अहम् इतः नेतव्यः भवता'' इति अवदत् अचल-पतिः ।

यया सह मया वार्तालापः कृतः सा पिशाची अस्ति इति ज्ञातवतः गजपतेः शरीरे कम्पनम्



उत्पन्नम् । तावता हरितशाटिकां धृतवती सा तरुणी मन्दहासपूर्वकं प्रकोष्ठात् बहिः आगत्य – ''भवन्तौ मां पिशाचीं भावयतः । अतः भोजनरूपेण मया नरमांसम् एव आनीतं स्यात् इति भाव्येत भवद्भ्याम्'' इति वदन्ती तयोः समीपम् आगता । नितरां भीतौ गजपतिः अचलपतिः च चीत्कुर्वन्तौ मूर्च्छां प्राप्तवन्तौ ।

तेन एव मार्गेण गच्छन् दलपतिः तयोः चीत्कारं श्रुतवान् । सः श्रीपुरस्य निवासी । उषानामिकां तरुणीं सः परिणेतुम् इच्छति स्म । किन्तु उषायाः मातापितरौ उक्तवन्तौ यत् सहस्रं रजतमुद्राः दत्ताः चेदेव एषः विवाहः भवितुम् अर्हति इति । तावत् धनं दलपतेः समीपे न आसीत् । ज्योतिषे तस्य महान् विश्वासः । उषायाः परिणयः सम्भवेत् उत न इति ज्ञातुं सः ज्योतिषिकस्य समीपं गतवान् ।

ज्योतिषिकः गजपतेः जन्मकुण्डलीं दृष्ट्वा अवदत् – ''यस्यां भवान् अनुरक्तः अस्ति तां भवान् परिणेतुम् अर्हति एव । अद्यैव भवान् अरण्यमार्गम् अतिक्रम्य लक्ष्मीपुरं गच्छतु । तत्रत्ये राममन्दिरे भवता पूजा करणीया । मध्येमार्गम् अस्वास्थ्यं भवेत् कदाचित् । तस्य निवारणाय भवता कृष्णाम्रं खादनीयम्, आत्मना सह तानि कानिचन नेतव्यानि च । तस्मिन् अरण्ये पिशाची निवसति इति जनाः वदन्ति । किं भवान् तेन अरण्यमार्गेण गन्तुम् अर्हेत् ?'' इति ।

''मम तु ज्योतिषे एव परपविश्वासः । पिशाचादिषु न अहं विश्वसिमि'' इति अवदत् दलपतिः ।

एतदनन्तरं दलपतिः स्वस्य गृहस्य पृष्ठभागे स्थितात् आम्रवृक्षात् कानिचन कृष्णाम्राणि उत्पाट्य स्यूते स्थापयित्वा अरण्यमार्गम् आश्रितवान् । ततः अल्पे एव काले तेन अचलपतिगजपत्योः चीत्कारः श्रुतः ।

यस्मात् कुटीरात् सः ध्वनिः श्रुतः तं प्रति वेगेन गतवान् दलपतिः । तत्र मूर्च्छितौ उभौ तरुणौ दृष्टौ । हरितशाटिकां धृतवती तरुणी तयोः पार्श्वे दृष्टा । तां दृष्ट्वा आश्चर्यम् अनुभवन् सः अपृच्छत् – ''किं प्रवृत्तम् अत्र ?'' इति ।

''अहं का इति अहमेव न जानामि । मया कथम् अत्र आगतम् इत्यपि न ज्ञायते । एतौ मां पिशाचीं भावयतः । अहं पिशाची स्याम् अपि'' इति अवदत् सा तरुणी ।

दलपतिः तां सन्देहपूर्णया दृष्ट्या पश्यन् अवदत् – ''भूतापिशाचादयः न सन्ति लोके । भवती मानवरूपा एव । भवतीं कोऽपि रोगः

बाधते । अतः एव अतीतं विस्मृतम् अस्ति भवत्या । तस्मात् एव कण्ठस्वरः अपि परिवृत्तः । मम समीपे कृष्णाम्रम् अस्ति । सर्वरोगापहारकं तत् भवती खादतु । तेन अतीतं स्मृतिपथम् आगच्छेत् एव'' इति ।

तदा सा भीता सती अवदत् - ''अहम् अस्वस्था न । कृष्णाम्रं न खादनीयं मया । एतौ स्वीकृत्य इतः निर्गच्छतु भवान्'' इति ।

दलपतिः तस्याः कथनं निराकुर्वन् - ''भवती पिशाची इत्यत्र सर्वथा नास्ति मम विश्वासः । भवत्या आम्रं खादनीयम् एव । खादयित्वा एव अहम् इतः निर्गमिष्यामि'' इति वदन् स्यूतात् एकम् आम्रं निष्कासितवान् ।

तदा सा इतोऽपि भीता सती - ''अन्तः प्रकोष्ठे सुवर्णनाणकानि सन्ति । यावत् इष्यते तावत् भवान् नयतु तावत्'' इति ।

तस्याः कथनम् अशृण्वन् इव दलपतिः तस्याः समीपं गतवान् । तदा सा पार्श्वस्थं प्रकोष्ठं प्रविष्टवती । दलपतिः ताम् अनुसृत्य अगच्छत् । किन्तु सा तत्र न आसीत् । सुवर्ण-नाणकग्रन्थयः तेन तत्र दृष्टाः ।

दलपतिः प्रकोष्ठात् बहिः आगत्य अचलपतिगजपत्योः मुखस्य उपरि जलसेचनं कृतवान् । अल्पे एव काले तौ सचेतनौ जातौ । दलपतिः तौ प्रवृत्तं सर्वम् उक्त्वा तयोः विषये विवरणं सङ्गृहीतवान् ।

दलपतेः समीपे कृष्णाम्राणि सन्ति इति ज्ञात्वा अचलपतिः नितरां सन्तुष्टः । दल-पतितः एकं फलं प्राप्य सः अवदत् - ''पिशाचीम् अपि दूरं प्रेषितवान् भवान् महासाहसी एव'' इति ।



''पिशाची कापि अत्र नास्ति एव'' इति दलपतिः प्रबलतया यदा अवदत् तदा गज-पतिः अपृच्छत् - ''एवं तर्हि हरितशाटिका-धारिणी सा का ? सा कथम् अदृश्यतां गता ?'' इति ।

''अवन्तिराजः पराजितः यदा जातः तदा तस्य कुटुम्बस्य जनाः अरण्ये वासम् आरब्ध-वन्तः इति श्रूयते । एषः वासः अन्यैः न ज्ञायेत इति अपेक्षन्ते ते । एषा अवन्तिराजपुत्री एव स्यात् । जनेभ्यः दूरे स्थातुं सा पिशाचीकथां सृष्टवती स्यात् अपि'' इति अवदत् दलपतिः ।

''अस्माकं भवतः च चिन्तनं परस्परं विभिन्नम् । इदानीम् अस्माभिः किं करणीयम् इति अभिप्रैति भवान् ?'' इति पृष्टवान् अचलपतिः ।

दलपतेः सूचनायाः अनुगुणं तैः त्रिभिः

अपि एकैकः सुवर्णग्रन्थिः स्वीकृतः । अत्रत्यं रहस्यं कुत्रापि न प्रकाशनीयम् इति तैः निर्णीतम् । गजपतिः कमनीयपुरं गतवान् ।

अचलपतिः दलपतिः च यदा लक्ष्मीपुरं प्राप्तवन्तौ तदा ग्रामीणाः पिशाचीविषये बहून् प्रश्नान् पृष्टवन्तः । तदा दलपतिः अवदत् - ''पिशाचाः अपायकराः । इतः परम् अहं तत् अरण्यं न प्रवेक्ष्यामि एव । अन्येनैव मार्गेण श्रीपुरं गमिष्यामि'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! दलपतेः व्यवहारः खलु विचित्रः ? सः अचलपतिं गजपतिं च अवदत् यत् लोके पिशाचाः एव न सन्ति इति । किन्तु सः एव ग्रामीणान् अवदत् यत् पिशाचाः नितराम् अपायकराः इति, इतः परं मया तत् अरण्यं न प्रविश्यते इति च । किम् एतत् विलक्षणं न ? सः कपटः वञ्चकः च इति स्पष्टं खलु ? सः भूतप्रेतादीनाम् अस्तित्वम् अङ्गीकरोति उत न ? हरितशाटिकाधारिणी सा पिशाची, उत राजकुमारी ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''मातापितरः प्रतिवेशिनः च यादृशविश्वासवन्तः भवन्ति तादृशविश्वासवान् भवति बालकः अपि । दलपतिः बाल्यपरिसरकारणतः पिशाचेषु विश्वासवान् न जातः । किन्तु अचलपतिः पिशाचेषु विश्वासवान् । अतः एव सः हरितशाटिकाधारिणीं दृष्ट्वा तां पिशाचीं मत्वा मूर्च्छां गतः । गजपतिः अपि तां पिशाचीत्वेन यदा ज्ञातवान् तदा मूर्च्छां गतः । दलपतिः तु तां तरुणीम् एव मतवान् । अतः मानवरूपया सह यथा, तथैव व्यवहृतवान् तया सह । अरण्ये पिशाचाः सन्ति इति सः ग्रामीणन् अवदत् यत् तस्य विशेषकारणम् अस्ति । अवन्तीराजकुटुम्बीयाः अरण्ये निवसन्तः अज्ञातजीवनं यापयन्ति इति सः जानाति स्म । एतत् रहस्यं यदि प्रकाश्येत तर्हि राजकुटुम्बस्य कष्टं भवेत् इति विचिन्त्य सः तथा उक्तवान् । उत्तमेन उद्देशेन एव सः एवं कृतवान् । तस्मात् सः कपटी वञ्चकः वा न'' इति ।

एवं राज्ञः मौनस्य भङ्गं कर्तुं शक्तवान् वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






## देवानां नृत्यभूमिः एवा



मणिपुरीयाः भावयन्ति यत् देवाः कदाचित् स्वस्य सर्वाणि कार्याणि परित्यज्य नृत्यगानादिषु मग्नाः भवन्ति इति । एतं पञ्चदशदिनात्मकं कालं पर्वत्वेन आचरन्ति ते । एतस्य पर्वणः नाम *'लाय् हरोबा'* इति (लाय् = देवाः, हरोबा = नृत्यगानादिषु प्रवृत्तिः) एतत् पर्व एप्रिल्मासे मेमासे वा प्रवर्तते प्रतिवर्षम् । कदाचित् शिवः एकं विशालं सरोवरं शोषितवान् । ततः सः सप्त देवान्, सप्त देवीः च आज्ञापितवान् यत् स्वर्गतः मृत्तिकाम् आनीय अत्र समतलता कल्प्यताम् इति । देवाः एतत् कार्यं कृत्वा सन्तोषेण नृत्यम् आरब्धवन्तः । सप्त दिनानि यावत् तत् नृत्यम् अहोरात्रं प्रवृत्तम् । सर्पराजः नागेन्द्रः स्वस्य फणायां स्थितस्य मणेः साहाय्येन तत्र प्रकाशव्यवस्थाम् उपकल्पितवान् । अतः एव तस्य प्रदेशस्य नाम 'मणिपुरम्' इति जातम् ।

## मुस्लिमैः निर्मितं प्रथमभवनम्

देहल्यां कुतुबमिनारसमीपे 'कुवाट् उल् इस्लाम्'नामकं यवनप्रार्थनमान्दिरम् अस्ति । मुस्लिमैः भारते ऐदम्प्राथम्येन निर्मितं भवनम् एतत् एव । देहलीशासकं पृथ्वीराजं जित्वा कुतुबुदीनः एतस्य जयस्य स्मरणाय एतत् भवनं निर्मितवान् । 'रायपितोरा'दुर्गस्य ये अयोमयादयः भागाः आसन् ते एव एतस्य निर्माणार्थं तैः उपयुक्ताः । इण्डोमुस्लिम्-तन्त्रशास्त्रस्य आरम्भः इतः एव जातः ।



*अन्यदेशीया जानपदकथा (जावाद्वीपीया)*

# आकाशात् आगतं भाग्यम्

केभ्यश्चित् शतकेभ्यः पूर्वं जावाद्वीपे बहूनि राज्यानि आसन् । स च द्वीपः इदानीम् इण्डोनेशियादेशे अन्तर्भवति । तत्रत्येषु कस्यचित् राज्यस्य प्रतीकचिह्नम् आसीत् कुक्कुटः । कुक्कुटः कथं प्रतीकचिह्नतां गतः इत्येतस्य विषये कथा एवं हि श्रूयते -

जावाद्वीपे कश्चन राजा । तस्य एकः एव पुत्रः । तस्य विलक्षणा प्रवृत्तिः । सः कुक्कुटयुद्धप्रियः । कुक्कुटयुद्धम् एव तस्य व्यसनम् । उत्तमान् कुक्कुटान् यदि सः पश्यति तर्हि तान् गृहीत्वा तेभ्यः युद्धशिक्षणं ददाति । राजप्रासादस्य अङ्गणे तेषां युद्धम् आयोज्य मनोविनोदं प्राप्नोति च ।

तदीयः मित्रगणः तस्य निमित्तम् उत्तमान् कुक्कुटान् अन्विष्य आनयति स्म । गच्छता कालेन तैः मित्रैः कुक्कुटप्राप्त्यर्थं बलात्कारः अपि आरब्धः । भाविनः राज्ञः निमित्तम् एव तैः कुक्कुटः नीयते स्म इत्यतः जनाः तस्य विरोधम् आचरितुं न उत्सहन्ते स्म । कदाचित् ग्रामीणेभ्यः कुक्कुटान् बलात् नयन्तः युवराजस्य सुहृदः राज्ञा दृष्टाः । राजा एतस्मात् नितरां खिन्नः । ग्रामीणाः अवदन् यत् एतादृशः व्यवहारः आ बहोः कालात् प्रचलति, तथापि अस्माभिः मौनेन सर्वं सह्यते इति ।

प्रासादं प्रत्यागतः राजा युवराजम् आदिष्टवान् यत् भवता एतस्मिन् एव क्षणे राजधानीं परित्यज्य गन्तव्यम् इति । सकृत् कृतं निर्णयं राजा न परिवर्तयति इति सर्वे जानन्ति स्म ।



अतः एतस्य निर्णयस्य विषये पुनश्चिन्तनं कर्तव्यम् इति निवेदयितुं कोऽपि धैर्यं न प्राप्तवान् । अतः युवराजेन राजधानी परित्यक्तव्या एव अभवत् । गूढचराः तम् अनुसृत्य गत्वा सः अरण्यं प्रविष्टवान् इत्येतत् दृढीकृत्य प्रत्यागत्य राजानं सर्वं निवेदितवन्तः ।

राजकुमारः यदा अरण्यं प्राविशत् तदा सन्ध्या उपस्थिता आसीत् । अन्धकारः प्रसरन् आसीत् । अग्रे कुत्र गन्तव्यम् इति राजकुमारः न जानाति । यद्यपि सः धैर्यवान् आसीत् तथापि वन्यजन्तूनां गर्जनादिध्वनिः तम् अधीरम् अकरोत् एव ।

किञ्चिदग्रे यदा गतं तदा दूरे काचित् प्रकाशरेखा दृष्टा तेन । सः ताम् अनुसृत्य गत्वा एकं कुटीरं प्राप्तवान् । तत्र काचित् तरुणी दृष्टा तेन । सः स्वस्य राजकुलीयत्वम् अप्रकटयन् स्वस्य दौर्भाग्यकथां विवृतवान् । तत् श्रुत्वा दयां प्राप्तवती सा तस्मै वासाय अनुज्ञां दत्तवती ।

तस्याः मातापितरौ अरण्यलभ्यानि औषधसस्यानि सङ्गृह्य विक्रीय जीवन्ति स्म । कदाचित् नगरं प्रति औषधीयसस्यानां नयनसमये नद्यां तयोः नौका निमग्ना जाता । तस्मात् तौ मरणं प्राप्तवन्तौ । अग्रे किं करणीयम् इति अजानती सा तरुणी मातापित्रोः वृत्तिम् एव कथञ्चित् अनुवर्तयन्ती एतस्मिन् कुटीरे एकाकितया निवसति स्म ।

राजकुमारः तत्रैव अवसत्, तां पर्यणयत् च । सः मृगयायां निपुणः आसीत् । अतः हरिणादीन् पक्षिणः च मारायित्वा काष्ठच्छेदकेभ्यः विक्रीय धनं सम्पादयति स्म सः । पत्न्याः वृत्तौ अपि यथाशक्ति साहाय्यम् आचरति स्म ।



दिनानि गतानि । अथ कदाचित् काष्ठच्छेदकानां मुखात् तेन श्रुतं यत् राजा दिवङ्गतः इति । अतः सः पत्नीम् अवदत् - ''प्रिये ! अहं नगरं गन्तुम् इच्छामि । अचिरात् एव प्रत्यागमिष्यामि । नगरं प्रति गमनात् आवयोः भाग्यं फलिष्यति इति अहं चिन्तयामि'' इति ।

''उल्पे एव काले प्रत्यागन्तव्यं भवता । विशेषः कश्चन अस्ति । अहं भवतः पुत्रं गर्भे धृतवती अस्मि'' इति लज्जया अवदत् तस्य पत्नी ।

राजकुमारः मन्दहासं प्रकटय्य 'अचिरात् एव प्रत्यागमिष्यामि' इति उक्त्वा ततः निर्गतवान् । यदा सः राजधानीं गतः तदा जनाः तं दृष्ट्वा नितरां सन्तुष्टाः । राज्ञा मरणात् पूर्वम् उत्तराधिकारित्वेन अन्यः कोऽपि न नियुक्तः



आसीत् । युवराजः एव खलु भवेत् सिंहासनस्य उत्तराधिकारी ? अतः अचिरात् एव पट्टाभिषेकमहोत्सवः प्रवृत्तः । तदङ्गतया विविधाः पारम्परिकाः क्रमाः अनुष्ठेयाः आसन् । तेषु व्यग्रः युवराजः अरण्यं प्रति गमनाय, पत्न्याः मेलनाय वा समयम् एव न प्राप्तवान् ।

अत्रान्तरे कश्चन महापूरः अरण्यं जलावृतम् अकरोत् । अतः युवराजस्य पत्न्या तत् अरण्यं परित्यक्तव्यम् अभवत् । सुदूरे गुहायां सा वासम् आरब्धवती । करुणामयाः काष्ठच्छेत्तारः तस्याः योगक्षेमदायित्वम् ऊढवन्तः । गुहायां सा पुत्राय जन्म दत्तवती । तस्मिन् एव काले राजपदम् आरूढवान् युवराजः ताम् अन्विष्यन् अरण्यम् आगतवान् । तत्र सा न दृष्टा । तया कुत्र गतम् इति वार्ता अपि तेन न ज्ञाता ।

कदाचित् युवराजपत्नी गुहायाः पुरतः पुत्रेण सह उपविष्टवती आसीत् । तदा आकाशे डयमानस्य कस्यचित् गृध्रस्य मुखात् कश्चन कुक्कुटशावकः तस्याः पुरतः पतितः । सा तम् उन्नीय जलादिदानेन तं सचेतनम् अकरोत् । कुक्कुटशावकः तत्रैव प्रवृद्धः । सः तादृशः बलवान् जातः यत् गुहासमीपे स्थितान् पक्षिणः पशून् च सः लीलया भाययति स्म । तादृशः अतिबलशाली कुक्कुटः लोके एव विरलः इति तत्प्रदेशवासिनः वदन्ति स्म ।

सिंहासनम् आरूढवतः युवराजस्य कुक्कुटयुद्धप्रियता पुनरपि उद्बुद्धा । इदानीं सः तत्सुहृदः च जनेभ्यः बलात् कुक्कुटं न स्वीकुर्वन्ति स्म । यस्य कुक्कुटः युद्धे जयं प्राप्नोति तस्मै यथायोग्यं पुरस्कारं ददाति स्म राजा ।

युवराजस्य पुत्रस्य नाम कोलिरसः इति । द्वादशवर्षीयः सः राज्ञः कुक्कुटयुद्धप्रियतावार्तां श्रुतवान् । अतः सः मातुः अनुज्ञां प्राप्य स्वस्य प्रियेण कुक्कुटेन सह राजधानीं गतवान् । कुक्कुटयुद्धदिने विविधेभ्यः प्रदेशेभ्यः जनाः आगताः आसन् । तेषां सर्वेषां कुक्कुटान् राज्ञः कुक्कुटः पराजितवान् ।

''महाराज ! यदि मम कुक्कुटः भवतः कुक्कुटं पराजयेत तर्हि भवान् मह्यं किं दद्यात् ?'' इति पृष्टवान् केलिरसः ।

तस्य मुखस्य दर्शनात् राज्ञि वात्सल्यभावः उद्गतः । किन्तु एतत् किमर्थम् इति राजा न ज्ञातवान् । 'मम कुक्कुटस्य एव जयः' इत्यत्र राज्ञः परमविश्वासः । अतः सः प्रतिप्रश्नम् अकरोत् - ''यदि मम कुक्कुटः भवतः कुक्कुटं पराजयेत तर्हि किं दद्यात् भवान् ?'' इति ।

''अहं तु निर्धनः । यदि मम कुक्कुटः

# THE ADVENTURES OF G-man

# एंड्रोमेनिया

## कहानी १ भाग २

प्रस्तुतकर्ता




POWER SUPPLY

Visit: www.parleproducts.com



PARLE

# जोड़ियां मिलाइए














1. पानी का राक्षस
2. टैरोलीन का हेड क्वार्टर
3. दुष्टों का विनाशक
4. जी-मैन का पावर सप्लाय
5. जी-मैन का साथी
6. अंधेरों का बादशाह

जयेत् तर्हि किञ्चित् धनं प्राप्येत इति आशया मया अत्र आगतम् । दातुं मम समीपे किमपि नास्ति । अतः मम कुक्कुटस्य पराजयः यदि स्यात् तर्हि अहं भवतः सेवां करिष्यामि'' इति अवदत् केलिरसः ।

केलिरसस्य कुक्कुटस्य आकारं दृष्ट्वा राजा सन्तोषं प्रकटितवान् । 'अहो, एषः अपूर्वः कुक्कुटः !' इति अवदन् द्रष्टारः । कुक्कुट-युद्धम् आरब्धम् । अल्पे एव काले केलिरसस्य कुक्कुटः राज्ञः कुक्कुटं पराजितवान् एव । सन्तुष्टः राजा केलिरसाय शतं सुवर्णमुद्राः दत्तवान् ।

''वत्स ! किं भवान् एतं कुक्कुटं मह्यं विक्रीणीत ?'' इति अपृच्छत् राजा ।

''न शक्यते महाराज ! एषः मम सुहृत् । यदा अहं शिशुः आसं तदा आकाशात् एषः प्राप्तः, मया सहैव प्रवृद्धः च । एतेन इदानीं यत् सम्पादितं तस्य आधारेण अहं मम माता च सुखेन जीवितुं शक्नुयाव'' इति अवदत् कोलिरसः ।

''कदा जातः भवान् ?'' इति राजा अपृच्छत् ।

''द्वादशभ्यः वर्षेभ्यः पूर्वं महापूरेण यदा अरण्यम् आवृतं तदा मम माता दूरे गुहायाम् आश्रयं प्राप्य मां प्रसुत-वती । मम पिता केनचित् कारणेन दूरं गतवान् । पुनः कदाचिदपि सः न प्रत्यागतः एव'' इति खेदेन अवदत् कोलिरसः ।

''एतस्य कुक्कुटस्य विक्रयणस्य प्रस्तावः त्यज्यतां नाम । किं भवान् एतेन कुक्कुटेन सह एतस्मिन् प्रासादे वासं कर्तुम् अर्हेत् ?'' इति केलिरसम् अपृच्छत् राजा ।

''तत् तु मम मातुः निर्णयम् अवलम्बते'' इति उक्तवान् केलिरसः ।

''एवं तर्हि भवान् मां भवन्मातृसमीपं नयतु'' इति वदन् राजा सिंहासनात् उत्थितवान् । तस्मिन् बाले तदीयः वात्सल्यभावः क्षणे क्षणे वर्धते स्म ।

कोलिरसम् अनुसृतवान् राजा । गुहापरिसरे राज्ञः उपस्थितिं दृष्ट्वा जनाः नितराम् आश्चर्य-युक्ताः जाताः । राज्ञः पार्श्वे रथे उपविष्टवन्तं पुत्रं केलिरसं दृष्ट्वा तु तदीया माता आनन्दसागरे निमग्ना जाता ।

सा पतिं झटिति अभिज्ञातवती । राजा रथात् अवतीर्य तां प्रीत्या आलिङ्गितवान् । राजा तां पट्टमहिषीम् उद्घोषितवान् । केलिरसः युवराजत्वेन उद्घोषितः । ततः राजपरिवारः प्रासादं प्रतिनिवृत्तः ।

पितुः दिवङ्गतेः अनन्तरं सिंहासनम् आरूढ-वान् कोलिरसः कुक्कुटं स्वस्य राज्यस्य प्रतीकचिह्नं कृतवान् ।



# वार्ताविशेषः

## बालस्य द्विचक्रिकायात्रा




यन्त्रागारोपाहारमन्दिरादिषु गृहेषु वा कर्मकरत्वेन बालाः न नियोक्तव्याः इति कथनं बहुधा श्रूयते लोके । बालकार्मिकनियुक्तेः निवारणाय राज्यसर्वकारः केन्द्रसर्वकारः च प्रयत्नं कुरुतः एव । तथापि एतस्मिन् क्षेत्रे विशेषप्रगतिः तु न दृश्यते । एतद्विषये जनजागरणाय त्रिवन्द्रम्समीपे कासरगोडुजनपदे अत्तिङ्ङलीये आवासीये विद्यालये अधीयानः चतुर्थकक्ष्यीयः मैकेल् एस्. कुमारः केरलस्य राजधान्याः त्रिवेन्द्रतः कासरगोडुपर्यन्तं (उत्तरान्ते स्थितं) द्विचक्रिकायात्राम् आरब्धवान् । बालदिने सः स्वस्य एतां द्विचक्रिकायात्राम् आरब्धवान् । पक्षानन्तरं सा च यात्रा सामाप्तिं गता । प्रयाणसमये सः गायति स्म, नृत्यति स्म, जनैः सह सम्भाषते स्म, आत्मना एव लिखितं लघुरूपकम् अभिनीय दर्शयति स्म चापि । लघुबालः कश्चन महाकारकं गजं कश्चित् कथं नियन्त्रयति इत्यादिकम् अपि दृष्टवान् आसीत् सः यात्रावसरे ।

## जनप्रियानि नामानि




अमेरिकादेशे भारतीयमूलौ मातापितरौ स्वस्य पुत्रस्य नाम कर्तुम् इच्छतः आदित्यः इति । यदि अपत्यं स्त्री भवति तर्हि तौ इच्छतः 'श्रेया' इति नाम । अमेरिकादेशीयेन समाजसुरक्षाविभागेन एषः अंशः प्रकटितः अस्ति एषु दिनेषु । २००३ तमे वर्षे तत्र २५४ बालकाः 'आदित्यः' इति नाम प्राप्तवन्तः, ३११ बालिकाः 'श्रेया' इति नाम प्राप्तवत्यः च । जनप्रियतायाम् अनन्तरीयं नाम अस्ति 'अमेयः' इति पुमपत्यस्य, स्त्र्यपत्यस्य नामं 'आशा' इति । 'अर्जुनः' इत्येतत् नाम अपि जनप्रियम् अस्ति तत्र ।

# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन



**अधस्तनकथा पठ्यताम् -**

जगदीशः पार्वतीपुरस्य भूस्वामी । महाधनिकः सः । तस्य सम्पत्तिः आसीत् अपारा । किन्तु महाकृपणता तस्य स्वभावः । तस्य धार्मिकश्रद्धा अधिका । प्रतिदिनं प्रातः सायं च सः नियततया देवालयं गच्छति स्म । किन्तु पूजासमये अन्ये भक्ताः इव सः नीराजनपात्रे एकां काकणिकाम् अपि न अर्पयति स्म । अर्चकः अपि तस्य एतस्य स्वभावस्य विषये अधिकतया खिन्नः न आसीत् ।

महाशिवरात्रिदिने देवालये विशेषपूजा आसीत् । धनिकः जगदीशः देवदर्शनोत्सुकानां भक्तानां पङ्क्तौ प्रथमः आसीत् । यदा अर्चकः तस्य पुरतः नीराजनपात्रम् आनीतवान् तदा जगदीशः दशपैसात्मकं नाणकं तस्मिन् स्थापितवान् ।

तदा आश्चर्यम् अनुभवन् अर्चकः अवदत् - ''ऐदम्प्राथम्येन भवता नीराजनपात्रे धनं स्थापितम् इति तु महते सन्तोषाय । किन्तु किं दशपैसानाणकस्थापनं भवतः अगौरवाय न भवेत् ? पुनः दशपैसानाणकं वा स्थाप्यताम्'' इति ।

- एतस्य उत्तररूपेण धानिकः किम् उक्तवान् स्यात् ?
- अन्यैः कियत् धनं दीयते इति किं तेन लक्षितम् ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः - ३१, मे - २००५**

नाम ------------------------ वयः --------- जन्मदिनाङ्कः ----------

विद्यालयः -------------------------------------- कक्ष्या ----------

गृहसङ्केतः ----------------------------------------------------

------------------------------------------------------------

------------------------------------ Pincode ----------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

# योग्यः प्रतीकारः

मोतीहरनामकस्य ग्रामस्य कश्चन सामान्यः निर्धनः कृषिकः रघुलालः । तस्यैव ग्रामस्य महाधनिकः अस्ति प्यारेलालः । ग्रामीणान् विविधैः प्रकारैः पीडयित्वा प्रभूतं धनं सम्पादितवान् आसीत् सः । ग्रामीणाः तस्य व्यवहारदौष्ट्यं न जानन्ति इति न । यद्यपि ते सर्वं जानन्ति स्म, तथापि आर्थिक-सङ्कटः यदा उपस्थितः भवति तदा अनन्य-गतिकतया तस्य कपिमुष्ट्या गृहीताः भवन्ति स्म । प्यारेलालतः यः धनं स्वीकरोति तस्य निर्धनता दिने दिने यथा वर्धते स्म, तथैव धनिकस्य धनसम्पत्तिः अपि वर्धते स्म ।



प्यारेलालस्य व्यवहारः अतिसरलः । ऋणदानसमये सः ऋणव्यवहारपत्रे हस्ताक्षरं स्वीकरोति स्म । ''ऋणं यत् स्वीकृतं तस्य दृढीकरणाय एतत् व्यवहारपत्रम् । यदा हस्ते धनं भवति तदा मूलधनं प्रत्यर्पयितुं शक्यम् । किन्तु वृद्धिः तु नियततया दातव्या एव'' इति वदति स्म प्यारेलालः । वर्षान्त्ये मूलधनात् अपि अधिकं धनं दत्तं भवति स्म वृद्धि-रूपेण । तथापि ऋणस्य मूलधनं तु न प्रत्यर्पितम् इत्येव परिगणितं भवति स्म । प्यारेलालस्य एषा गणना कीदृशी इति ग्रामीणाः सर्वथा न अवगच्छन्ति स्म ।

रघुलालः कदाचित् प्यारेलालतः ऋणं स्वीकृतवान् । किन्तु ऋणं प्रत्यर्पयितुं न शक्तवान् । अतः प्यारेलालः रघुलालस्य धान्यागारतः सर्वाणि धान्यानि अनयत् । अग्रे रघुलालस्य भूमिः अपि तेन वशीकृता । रघुलालस्य गृहे स्थितानि पात्राणि अपि नीतानि तेन अग्रिमे काले । केषाञ्चित् दिनानाम् अनन्तरं यदा प्यारेलालः पुनरपि गृहं प्रति आगतः तदा निर्धनः रघुलालः अवदत् - ''इदानीं मम शरीरे यत् वस्त्रम् अस्ति तत् अतिरिच्य अन्यत् किमपि नास्ति मम गृहे । किमहं करवाणि ?'' इति ।

तदा प्यारेलालः अवदत् - ''भवान् राम शरणं गच्छतु । परमकृपालुः सः ममापि साहाय्यं कृतवान् आसीत् । अहं पुनः कदाचित् आगमिष्यामि'' इति । एतावत् उक्त्वा सः ततः निर्गतवान् ।

'रामः यदि प्यारेलालस्य साहाय्यं कृतवान् स्यात् तर्हि ममापि साहाय्यं कुर्यात् एव' इति विचिन्त्य रघुलालः रामस्य अन्वेषणाय गृहात् निर्गतवान् । प्रस्थानसमये द्वित्राः रोटिकाः स्वीकृताः तेन । रामस्य दर्शनाय कः मार्गम् उपदिशेत् इति चिन्तयन् सः निरन्तरतया अग्रे गतवान् । किञ्चिद्दूरं गमनानन्तरं कश्चन अर्चकः तेन दृष्टः । रघुलालः तम् अवदत् - ''रामः कुत्र इति किं भवान् वक्तुं शक्नुयात् ? यदि भवान् वदेत् तर्हि मम समीपे स्थितासु तिसृषु रोटिकासु एकां भवते दास्यते मया'' इति ।



अर्चकः रोटिकास्वीकारे आसक्तः न आसीत् । सः किमपि उत्तरं न दत्तवान् एव । रघुलालः निराशः सन् अग्रे अगच्छत् । पुनः किञ्चिद्दूरं यदा गतं तदा भस्मधारी कश्चन दृष्टः । ''रामः कुत्र दृश्येत इति किं भवान् जानाति ?'' इति अपृच्छत् रघुलालः । सः भस्मधारी रघुलालेन दत्तां रोटिकां स्वीकृत्य अवदत् - ''रामः कुत्र स्यादिति मया न ज्ञायते । अहं शिवम् एव जानामि, न तु रामम्'' इति । रघुलालः पुनरपि निराशतां प्राप्य अग्रे प्रस्थितवान् ।

रघुलालः एतावता एव नितरां श्रान्तः बुभुक्षितः च आसीत् । यद्यपि आहारसेवनं विश्रान्तिस्वीकारः च तेन कर्तुं शक्यः आसीत्, तथापि यः रामविषयं वदेत् तेन सहैव आहारः सेवनीयः इति सङ्कल्प्य सः अग्रे अगच्छत् । तत्र कश्चन जीर्णवस्त्रधारी तेन मिलितः । सोऽपि श्रान्तः एव । ''अहं रामस्य अन्वेषणाय उद्युक्तः अस्मि । सः मम साहाय्यं कुर्यात् इति मम निरीक्षा'' इति तम् अवदत् रघुलालः ।

''किं भवान् रामेण मेलितुम् इच्छति ? अहम् एव रामः नाम । किं साहाय्यम् इच्छति भवान् ?'' इति अपृच्छत् सः वृद्धः ।

''आवाम् आदौ आहारं सेवावहै'' इति वदन् रघुलालः रोटिकाग्रन्थिम् उद्घाटितवान् । ततः उभौ अपि सन्तोषेण रोटिकां खादितवन्तौ । रोटिकाखादनावसरे रघुलालः धनिकस्य पीडावृत्तान्तं श्रावयित्वा अवदत् - ''इदानीम् अहं धनहीनः, भूमिहीनः, सर्वस्वहीनः चापि अस्मि'' इति ।



रोटिकाखादनसमाप्तेः अनन्तरं स्वस्य स्यूततः एकं शङ्खं निष्कास्य – ''यदि एषः योग्येन क्रमेण वाद्येत तर्हि यत् इष्यते तत् प्राप्यते भवता । अहं वृद्धः जातः अस्मि । तस्मात् एतस्य वादने मम शक्तिः सर्वथा नास्ति । अतः भवान् एव एतत् स्वीकरोतु । धनिकः भवन्तम् अग्रे यथा न पीडयेत् तथा योग्यम् उपायं चिन्तयतु च'' इति उक्त्वा ततः निर्गतवान् सः वृद्धः ।

रघुलालः गृहं प्रत्यागत्य द्वारं पिधाय शङ्खस्य वादनाय विविधान् प्रयत्नान् अकरोत् । अन्ते योग्यः क्रमः तेन ज्ञातः । शङ्खतः नाणकानि अपि प्राप्तानि । रघुलालः दुराशाग्रस्तः तु न आसीत् । अतः स्वस्य आवश्यकता यावती तावत् एव धनं प्राप्तवान् सः । शङ्खः धनं ददाति स्म चेदपि सः स्वस्य परिश्रमजीवनं तु न परित्यक्तवान् ।

कदाचित् प्यारेलालः रघुलालस्य क्षेत्रसमीपम् आगतवान् । रघुलालस्य क्षेत्रं सस्यैः शोभते स्म । सः तस्मिन् एव दिने मधुरखाद्यं स्वीकृत्य रघुलालस्य गृहं गत्वा प्रीतिं वर्षन् अवदत् – ''रघुलाल ! भवतः क्षेत्रं दृष्ट्वा अहं नितरां सन्तुष्टः । ऋणव्यवहारं स्मारयितुम् अहम् अद्य न आगतः । भवतः यशसः रहस्यं ज्ञातुं आगतम् अस्ति मया'' इति ।

तदा रघुलालः स्वसमीपे स्थितं शङ्खं प्रदर्शयन् अवदत् – ''एतत् सर्वम् अपि एतस्य शङ्खस्य कृपया एव सम्पन्नम्'' इति ।

एतत् श्रुतवति प्यारेलाले दुराशा उत्पन्ना । 'कथमपि मया एषः शङ्खः एतस्मात् वशीकरणीयः' इति विचिन्त्य सः ततः निर्गमनसमये उपायेन शङ्खं स्वस्य राङ्कवेण आच्छाद्य ततः निर्गतवान् । रघुलालसमीपे धनम् तु आसीत् एव । अतः शङ्खस्य उपयोगस्य आवश्यकता न आसीत् तस्य । तस्मात् गृहे शङ्खः नास्ति इत्यंशः तेन न अवगतः एव ।

गृहं गतः प्यारेलालः शङ्खतः ध्वनेः उत्पादनाय विविधान् प्रयासान् अकरोत् । तथापि तेन साफल्यं तु न प्राप्तम् । अतः सः मधुरभक्ष्यैः सह रघुलालस्य गृहं पुनरपि गत्वा मधुरस्वरेण अवदत् – ''मित्र ! क्षमायाचनाय अहम् आगतः अस्मि । तस्मिन् दिने शङ्खस्य सौन्दर्येण अहं नितराम् आकृष्टः । तस्य सौन्दर्यस्य पूर्णदर्शनाय सः मया नीतः आसीत् स्वगृहं प्रति । एतस्य वादनाय मया बहुधा प्रयासः कृतः । किन्तु इतः शब्दः न उत्पन्नः

एव । एतं वादयित्वा सम्पत्तिः प्राप्ता इति यत् उच्यते तत्र विश्वासः नास्ति मम'' इति ।

तदा निष्कपटः रघुलालः तं शङ्खं स्वीकृत्य वादितवान् । यदा तस्मात् नाणकानि पतितानि तदा तु प्यारेलालः स्वस्य नेत्रयोः स्वयमेव विश्वासं न कृतवान् । सर्वं दृष्ट्वा सः अवदत् - ''रघुलाल ! पूर्वतनं सर्वं विस्मराम तावत् । भवान् मत्तः यत् ऋणं स्वीकृतवान् तत् प्रत्यागतमिति अहं भावयामि । प्रतिफल-रूपेण भवता करणीयं तु अल्पम् एव । भवता यत् प्राप्येत तस्य द्विगुणितं मया यथा प्राप्येत तथा क्रियेत चेत् अलम्'' इति ।

'' भवता अहं बहुधा पीडितः । तत् मया कथं विस्मर्येत ? मत्तः यत् धनं स्वीकृतं भवता तत् आदौ प्रत्यर्पणीयम् । मदीयं क्षेत्रं यत् वशीकृतं तदपि प्रत्यर्पणीयम् । यानि पात्रादीनि मम गृहात् भवता नीतानि तानि अपि अवश्यं प्रत्यर्पणीयानि । तदनन्तरम् एव भवतः प्रस्तावः अङ्गीकरणीयः वा न वा इति अहं निर्णेष्यामि'' इति रघुलालः अवदत् ।

एतत् श्रुत्वा प्यारेलालः रघुलालस्य हस्तात् शङ्खं बलात् स्वीकृत्य - ''एवं तर्हि एषः शङ्खः मम समीपे भवतु । तदा तु न भवतः लाभः, न वा ममापि'' इति उक्त्वा ततः निर्गन्तुम् उद्युक्तः ।

तदा रघुलालः पराजयम् अङ्गीकुर्वन् उक्त-वान् - ''यत् मया प्रार्थ्यते तस्य द्विगुणित-प्राप्तिः भवतः यथा स्यात् तथा करणम् अनु-मन्यते मया । धनस्य प्रत्यर्पणम् अपि अहं परित्यजामि । किन्तु मदीया भूमिः पात्राणि अद्यैव प्रत्यर्पणीयानि'' इति ।

प्यारेलालः पात्राणि रघुलालाय दत्तवान् । भूमिः अपि रघुलालेन प्रतिप्राप्ता । अनन्तरदिने रघुलालः शङ्खं वादयन् धनं न ऐच्छत्, प्रत्युत मम काणता भवतु इति प्रार्थितवान् । एतस्मात् रघुलालः काणः जातः । किन्तु द्विगुणितस्य फलस्य स्वीकर्ता प्यारेलालः अन्धः जातः । योग्यः प्रतीकारः साधितः आसीत् रघुलालेन ।

केषाञ्चित् दिनानाम् अनन्तरं प्यारेलालः रघुलालम् आहूय अवदत् - ''या अत्याशा प्रदर्शिता तस्याः योग्यं प्रतिफलं प्राप्तम् अस्ति मया । मम दृष्टिशक्तिः यथा प्रतिप्राप्येत तथा भवान् शङ्खं प्रार्थयतु कृपया'' इति ।

जानपदकथा एतेन वाक्येन समाप्तिम् इति - ''शङ्खेन प्यारेलालस्य प्रार्थना अनुमता, तस्मै दृष्टिः प्रदत्ता च'' इति ।





# आत्मीयः सुहृत्

प्राचीने काले ब्रह्मदत्तः यदा काशीराज्यं परिपालयन् आसीत् तदा बोधिसत्त्वः कस्मिंश्चित् ब्राह्मणकुले जननं प्राप्तवान् आसीत् । मातापितरौ तस्य नाम सत्यानन्दः इति निश्चितवन्तौ । द्वित्राणां वर्षाणाम् अनन्तरं तस्य मातापितृभ्याम् अपरः अपि पुत्रः प्राप्तः । तस्य नाम निश्चितं नित्यानन्दः इति ।

यावत् तौ पुत्रौ प्राप्तवयस्कौ जातौ तावता तयोः मातापितरौ स्वर्गस्थौ जातौ । एतस्मात् जीवने विरक्तिं प्राप्तवन्तौ तौ गङ्गातीरे कुटीरं निर्माय संन्यासजीवनम् आरब्धवन्तौ । गङ्गा-नद्याः एकस्मिन् तीरे एकस्य कुटीरम् आसीत् । अपरस्मिन् तीरे अपरस्य कुटीरम् ।

कदाचित् पाताललोकवासी सर्पराजः मणिकान्तः मानवरूपं धृत्वा भूलोकम् आगत-वान्, गङ्गातीरे सञ्चारम् आरब्धवान् च । तदवसरे तेन नित्यानन्दस्य कुटीरं दृष्टम् । अल्पे एव वयसि संन्यासजीवनम् आरब्धवन्तं नित्यानन्दं दृष्ट्वा सः नितराम् आश्चर्यचकितः । सः नित्यानन्दं स्वस्य परिचयम् उक्त्वा तेन सह वार्तालापम् आरब्धवान् ।

गच्छता कालेन तयोः महती मैत्री प्रवृद्धा । मणिकान्तः प्रतिदिनं नित्यानन्दस्य कुटीरम् आगच्छति स्म । दिने काश्चन घण्टाः यावत् तौ सर्वान् विषयान् अधिकृत्य वार्तालापं कुरुतः स्म । मणिकान्तः कदाचित् वास्तविकं रूपं धृत्वा नित्यानन्दस्य उपरि फणां प्रसार्य शीतलां छायां परिकल्पयति स्म ।

एवमेव कानिचन वर्षाणि अतीतानि । कदाचित् नित्यानन्दस्य मनसि सन्देहः उत्पन्नः यत् सुहृत् अपि अयं यदि कदाचित् कुपितः भवेत् तर्हि मां दशेत् अपि इति । कोपसमये सर्पकुलीयाः मैत्रीं न परिगणयन्ति इतिः सः जानाति स्म ।

एतम् अंशं चिन्तयतः नित्यानन्दस्य मनः नितराम् अशान्तं जातम् । अतः सः गङ्गाम्

अतिक्रम्य अग्रजं सत्यानन्दं द्रष्टुं गतवान् । अनुजस्य दर्शनमात्रेण सत्यानन्दः अपृच्छत् - ''भ्रातः ! भवतः मुखे किमर्थम् आतङ्कः दृश्यते ? किं वा प्रवृत्तम् ?'' इति ।

तदा नित्यानन्दः प्रवृत्तं सर्वम् अश्रावयत् । सर्व श्रुत्वा सत्यानन्दः अपृच्छत् - ''भ्रातः ! भवतः कथनात् ज्ञायते यत् भवान् मणिकान्तस्य आत्मीयः सुहृत् इति । कदाचित् ततः हानिः भवेत् इति भवतः मनसि आतङ्कः अपि । यदि मणिकान्तः भवतः कुटीरं न आगच्छेत् तर्हि किं भवान् निश्चिन्ततया स्थातुं शक्नुयात् ?'' इति ।

नित्यानन्दः क्षणं यावत् विचिन्त्य अवदत् - ''प्रायः तस्य अनागमनात् एव मम चिन्ता परिहृता भवेत् इति भाति । किन्तु तस्य आगमनं कथं निवारणीयम् इति न ज्ञायते । मम गृहं मा आगच्छतु इति मित्रम् उद्दिश्य कथनम् अयुक्तम् इति मम चिन्तनम्'' इति ।

एतत् श्रुत्वा हसन् पृष्टवान् सत्यानन्दः - ''अनुज ! भवत्समीपम् आगच्छन् मणिकान्तः कीदृशानि आभरणानि धरति ?'' इति ।

''तस्य शरीरं तु विविधैः आभरणैः विभूषितं भवति । तेषु तस्य कण्ठे कान्त्या शोभमानः कश्चन विशिष्टः मणिः तु नितराम् अमूल्यः'' इति अवदत् नित्यानन्दः ।

''अग्रिमे अवसरे यदा मणिकान्तः भवत् समीपम् आगमिष्यति तदा भवान् तं मणिं याचतु । ततः भवतः समस्या परिहृता भविष्यति'' इति अवदत् सत्यानन्दः ।

एतस्याः घटनायाः द्वित्राणां दिनानाम्



अनन्तरं मणिकान्तः नित्यानन्दस्य कुटीरं प्रति आगतः । तदा नित्यानन्दः तस्य कण्ठे विराजमानम् अमूल्यं मणिम् अयाचत । एतस्मात् असन्तुष्टः मणिकान्तः विना प्रति-वचनं ततः निर्गतवान् ।

अनन्तरदिने अपि मणिकान्तः नित्यानन्द-कुटीरं प्रति आगतवान् । तदवसरे नित्यानन्दः कुटीरस्य द्वारे एव आसीत् । सः मणिकान्तम् अपृच्छत् - ''ह्यः मया अमूल्यः मणिः याचितः आसीत् । किन्तु भवता सः न दत्तः । किमर्थम् ?'' इति ।

एतस्मिन् अपि दिने मणिकान्तः कुटीरम् अप्रविश्य एव विना वचनं ततः प्रतिगतवान् ।

तृतीये अपि दिने यदा मणिकान्तः कुटीर-समीपम् आगतवान् तदा नित्यानन्दः अग्रे गत्वा अपृच्छत् - ''मया द्विवारं मणिः याचितः । तथापि भवता मणिः तु न दत्तः । अद्य वा

मणिः दीयते उत न ?'' इति ।

तदा मणिकान्तः औदासीन्यपूर्णेन स्वरेण - ''नित्यानन्द ! एषः मणिः असाधारणः । कामधेन्वायते एषः । अहं यत् इच्छामि तत् दातुं समर्थम् एतं मणिम् अहं कदापि कस्मैचिदपि न दास्यामि । तादृशं मणिम् एव याचमानं भवन्तं धिक् । इतः परं भवतः कुटीरं प्रति न आगमिष्यामि अहम्'' इति उक्त्वा ततः निर्गतवान् ।

एतदनन्तरं सप्ताहं यावत् मणिकान्तस्य प्रतीक्षां कृतवान् नित्यानन्दः । तथापि मणिकान्तः तु न आगतः । एतस्मात् नित्यानन्दस्य चिन्ता प्रवृद्धा । 'मणिं याचन् अहम् उत्तमस्य मित्रस्य सहवासतः वञ्चितः अभवम्' इति चिन्तयन् सः नितरां खिन्नः जातः ।

तेषु एव दिनेषु अनुजस्य दर्शनाय सत्यानन्देन नित्यानन्दस्य कुटीरं प्रति आगतम् । चिन्ताकारणतः नितरां कृशतां प्राप्तवन्तम् अनुजं दृष्ट्वा सः अवदत् - ''भवतः कृशता अधिका जाता दृश्यते । किं भवता मम कथनं न अनुसृतम् ? किम् इतोऽपि सर्पराजात् भवता मुक्तिः न प्राप्ता ?'' इति ।

''भ्रातः ! भवतः कथनस्य अनुगुणं मया मणिः प्रार्थितः । तस्मात् दिनात् सः मम कुटीरं प्रति आगमनं परित्यक्तवान् । यदि सः पूर्ववत् एव मम कुटीरं प्रति आगमिष्यत्, मम शिरसि फणां यदि प्रासारयिष्यत् तर्हि मम महान् आनन्दः अभविष्यत् । तस्य अदर्शनात् इदानीं मम मनः नितराम् अशान्तम् अस्ति । तस्मात् एव मम कृशता प्रवृद्धा अस्ति'' इति नित्यानन्दः अवदत् ।

तदा सत्यानन्दरूपेण स्थितः बोधिसत्त्वः अवदत् - ''अनुज ! सर्पराजं मणिकान्तं भवान् आत्मीयं सुहृदं भावितवान् । तादृशः सः मणियाचनामात्रेण भवतः सहवासम् एव परित्यक्तवान् । किम् आत्मीयस्य सुहृदः व्यवहारः एवं भवितुम् अर्हति ? सः भवत्तः दूरं गतः यत् तत् तु भवतः एव हिताय । अतः एतद्विषये अल्पा अपि चिन्ता करणीया नास्ति भवता'' इति ।

अग्रजस्य सत्यानन्दस्य वचने सत्यता अस्ति इति अवगच्छन् नित्यानन्दः सर्पराजस्य विषये चिन्तनं परित्यक्तवान् । ततः अचिरात् एव सः यथापूर्वं स्वस्थः जातः ।





# विष्णुपुराणम्

यथा यथा कृष्णः प्रवृद्धः तथा तथा तस्य शत्रूणां सङ्ख्या अपि प्रवृद्धा । तादृशानां कृष्णविरोधिनां दुष्टराजानां प्रमुखौ आस्तां शिशुपालः जरासन्धः च । पौण्ड्रकः करूश-देशस्य राजा । सः कृतकान् हस्तान् निर्माप्य तैः शङ्खचक्रादिकं धृत्वा बृहतीं गदाम् अपि धृत्वा - ''अहमेव विष्णुः, अहमेव वासुदेवः'' इति सर्वत्र उद्घोषयति स्म ।

शिशुपालस्य भ्राता साल्वः नाम कश्चित् आसीत् । सः 'सौभक'नामके विमाने द्वारका-नगरस्य उपरि विहारं कुर्वन्, युद्धार्थम् अवकाशं प्रतीक्षते स्म । पूर्वस्यां दिशि विद्यमाने शोणपुरे बलिचक्रवर्तिनः पुत्रः बाणासुरः शासनं करोति स्म । साक्षात् शिवः एव तस्य राज्यस्य रक्षणं करोति स्म । तेन गर्वितः सः स्वराज्यात् बहिः अपि शासनं कर्तुं प्रयत्नं करोति स्म ।

कालान्तकः कालयवनराक्षसस्य अनुजः । 'कस्माच्चिदपि जीवितः भवतः मरणं न भविष्यति' इति कश्चन दैवज्ञः तम् उक्तवान् आसीत् । तेन वचनेन मदोन्मत्तः सः, म्लेच्छ-यवनसैन्यसहितः सन् दारुणं रक्तपातं करोति स्म । विग्रहशिल्पादीन् भञ्जयन् देशे सर्वत्र लुण्ठनं करोति स्म । कृष्णस्य मारणम् एव तस्य लक्ष्यम् आसीत् ।

एवमेव सर्वत्र आक्रमणं कुर्वन् सः गान्धार-देशं प्राप्तवान् । तत्र एकम् अमृतशिलानिर्मितं जगन्मोहकं मोहिनीशिल्पम् आसीत् । तत् दृष्ट्वा कालान्तकः तस्य सौन्दर्येण व्यामुग्धः जातः । कृष्णः तत् शिल्पं विश्वकर्मद्वारा निर्माप्य तस्य अन्तः स्वयोगमायाग्निं प्रवेशितवान् आसीत् । परन्तु एतं विषयं कालान्तकः न जानाति स्म ।

कालान्तकः तत् मोहिनीशिल्पं नीत्वा स्वीये



अन्तःपुरे स्थापितवान् । तत् पश्यन् प्रतिदिनं सः चिन्तयति स्म यत् यदि एतस्य प्राणाः भवेयुः तर्हि कथं स्यात् ? इति ।

एकदा रात्रिसमये सुप्तः कालान्तकः मुरलीगानस्य लयानुगुणं नूपुरशब्दं श्रुत्वा जागरितः । उत्थाय सः दृष्टवान् यत् तस्य शिल्पस्य स्थाने एका अद्भुतसुन्दरी नाट्यं कुर्वती अस्ति इति ! मोहावेशपीडितः सः तस्याः समीपं गत्वा ताम् आलिङ्गितवान् । परन्तु तदभ्यन्तरे एव सा सुन्दरी पुनः शिल्परूपं प्राप्तवती । शिल्पस्य हस्ताभ्यां बद्धः कालान्तकः तत्रैव दग्धः जातः । शिल्पस्य हस्तद्वयम् अपि भग्नम् ।

तदनन्तरं कालान्तकस्य सेनया सह कृष्णः युद्धं कृतवान् । भीता सा सेना बहुदूरं धावितवती । तस्मिन् एव समये तत्र विद्यमानः अग्निपर्वतः स्फोटितः, यस्य ज्वालाभिः यवनराज्यम् एव भस्मीभूतम् अभवत् ।

एवं पश्चिमदिशि स्थितानां म्लेच्छानां यवनानां च विद्रोहः स्थगितः । परन्तु पूर्वदिशि स्थितस्य प्राग्ज्योतिषपुरस्य राज्ञः नरकासुरस्य प्रजापीडनकार्यं तु तथैव प्रचलति स्म ।

यदा विष्णुः वराहावतारं धृतवान् आसीत् तदा तेन भूदेव्याम् उत्पन्नः पुत्रः एव एषः नरकासुरः । सः प्राग्ज्योतिषपुरं स्वस्य राजधानीं कृत्वा शासनम् आरब्धवान् । असुरसेनाभिः सह देवलोकम् आक्रम्य युद्धं कृतवान् सः । युद्धे तेन एव जयः प्राप्तः । सः देवमातुः अदितेः कर्णकुण्डलद्वयं बलात्कारेण आनीतवान् । अनन्तरं सः ऋषीणां साधुजनानां च निर्दयं पीडनम् आरब्धवान् । सः षोडशसहस्रं कन्याः बद्ध्वा आनीय कारागृहे स्थापितवान् ।

नरकासुरस्य दुराचारैः सन्तप्ताः देवाः मुनयः च कृष्णं शरणम् गतवन्तः । कृष्णः तेभ्यः अभयं दत्तवान् । नरकासुरस्य वधार्थं सः प्रस्थितः । तेन सह सत्यभामा अपि प्रस्थिता । नरकासुरेण वरं प्राप्तम् आसीत् यत् यदि स्वमात्रा भूदेव्या व्रणितत्वं प्राप्यते चेत् एव मरणम् इति । सत्यभामा तु भूदेव्याः अंशतः एव उत्पन्ना आसीत् ।

कृष्णेन सत्यभामया सह गरुडवाहने प्राग्ज्योतिषपुरं प्राप्तम् । असुरसेनायाः उपरि आक्रमणं कुर्वता तेन बहवः असुराः मारिताः ।

अन्ते नरकासुरः कश्चित् मदगजम् आरुह्य युद्धार्थम् आगतवान् । तेन सह युद्धं कुर्वन् यदा कृष्णः श्रान्तः, तदा सत्यभामा घोरं युद्धम् आरब्धवती ।

युद्धे सा सर्वं बलम् अपि उपयुज्य एकं बाणं प्रयुक्तवती । तेन बाणेन नरकासुरस्य वक्षस्स्थलं छिन्नम् । "अम्ब !" इति वदन् नरकासुरः भूमौ पतितवान् । पुनः उत्थाय सर्वसाहसेन गदां गृहीत्वा कृष्णं मारयितुं प्रयत्नं कृतवान् । तदा कृष्णः चक्रायुधेन तस्य शिरसः छेदनं कृतवान् । तत् च छिन्नं शिरः विष्णुस्तुतिं कृत्वा कृष्णं वरं प्रार्थयत यत् लोकस्य सर्वे अपि जनाः मां स्मरेयुः इति ।



"तथाऽस्तु" इति कृष्णः वरं दत्तवान् । ततः आरभ्य नरकासुरसंहारदिने 'नरकचतुर्दशी' पर्वणः आचरणम् आरब्धम् । तदनन्तरदिने नरकपरिपालनस्य अन्त्यम् अभवत् इति कृत्वा दीपावलीपर्वणः अपि आचरणम् आरब्धम् ।

भगदत्तः नरकासुरस्य पुत्रः । कृष्णः भगदत्तस्य पट्टाभिषेकं निर्वर्तितवान् । अनन्तरं सः अदितेः कुण्डलद्वयं गृहीत्वा सत्यभामया सह द्वारकाम् आगतवान् ।

एकस्मिन् दिने कृष्णः रुक्मिणीदेव्याः मन्दिरे आसीत् । तदा तत्र आगतः नारदः एकं पारिजातपुष्पं कृष्णस्य हस्ते दत्तवान् । कृष्णः तेन पुष्पेण रुक्मिण्याः केशालङ्कारं कृतवान् । एतं विषयं ज्ञात्वा सत्यभामा क्रुद्धा । तदा कृष्णः तां सान्त्वयन् उक्तवान् - "चिन्तां न करोतु । एकेन पारिजातपुष्पेण किम् ? पारिजातवृक्षम् एव आनीय भवत्याः मन्दिरे आरोपयिष्यामि" इति ।

अदितेः कुण्डलप्रत्यर्पणव्याजेन कृष्णः सत्यभामया सह, गरुडवाहनेन देवलोकं गतवान् । अदितिं दृष्ट्वा कुण्डलद्वयं प्रत्यर्प्य सः नन्दनवनम् आगतवान् । तत्र स्थितं पारिजातवृक्षं दृष्ट्वा तत् उत्पाट्य गरुडस्य उपरि संस्थाप्य भूमिं गन्तुं सः उद्युक्तः जातः ।

एतां पारिजातापहरणवार्तां श्रुत्वा देवेन्द्रः युद्धार्थम् आगतवान् । सः कृष्णस्य उपरि वज्रायुधं प्रयुक्तवान् । तेन गरुडस्य पक्षः घट्टितः जातः । गरुडः तु वज्रायुधम् अधः पातितवान् ।

एवं देवेन्द्रस्य वर्गभङ्गः अभवत् । सः उक्तवान् - "यावत् कृष्णः भूमौ स्थास्यति, तावत् पारिजातवृक्षः भूमौ तिष्ठतु" इति ।

सत्यभामायाः अन्तःपुरस्य उद्यानं पारिजातपुष्पाणां सुगन्धेन पूर्णम् अभवत् ।

श्रीकृष्णस्य पुत्राः न आसन् । अतः सः कैलासं गत्वा तपः कृत्वा शिवस्य अनुग्रहं प्राप्तवान् । तस्मिन् समये साल्वः पौण्ड्रकः च



द्वारकाजनान् पीडयन्तौ आस्ताम् । कृष्णः तयोः संहारं कृतवान् । तदा दन्तवक्त्रः गदां गृहीत्वा कृष्णं मारयितुम् उद्युक्तः । परन्तु कृष्णः एव तस्य संहारं कृतवान् । तदा तस्य देहे स्थितः विजयांशः कृष्णस्य देहे विलीनः अभवत् ।

कृष्णस्य प्रद्युम्नादयः अनेके पुत्राः जाताः । प्रद्युम्नस्य कुमारः अनिरुद्धः । बाणासुरस्य पुत्री उषा स्वप्ने एतम् अनिरुद्धं दृष्टवती । तेन मोहिता अभवत् सा । तस्याः सखी चित्रलेखा 'शाम्बरि 'विद्यायप्रभावतः अनिरुद्धम् उषायाः अन्तःपुरम् आनीतवती । अनन्तरं गान्धर्व-विधिना उषानिरुद्धयोः परिणयः अभवत् ।

बाणासुरः स्वपुत्र्याः अन्तःपुरे स्थितम् अनिरुद्धं नागपाशेन बद्ध्वा कारागृहे स्थापित-वान् । पुत्रस्य रक्षणार्थं कृष्णः बाणासुरेण सह युद्धं कृतवान् । बाणासुरं रक्षितुं शिवः तत्र आगत्य युद्धम् आरब्धवान् । परन्तु शिवः अपि पराजितः ।

बाणासुरस्य सहस्रं हस्ताः आसन् । तेषु हस्तद्वयमात्रम् अवशेष्य अन्यान् हस्तान् कृष्णः छिन्नवान् । अनन्तरं बाणासुरः कृष्णं शरणम् आगतवान् । उषानिरुद्धयोः विवाहः वैभवेन अभवत् । एतेन उत्तरदेशीयेन राज्ञा सह अपि कृष्णस्य सम्बन्धः प्रवृद्धः । अतः समग्रे देशे ऐक्यं सम्पादितम् अभवत् ।

कृष्णः धर्मात्मनां पाण्डवानां सहायकः आसीत् । सः भगिनीं सुभद्राम् अर्जुनाय दत्त्वा विवाहं निर्वर्तितवान् ।

खाण्डववनदहनसमये कृष्णार्जुनौ तत्र स्थितं राक्षसशिल्पिनं मयं रक्षितवन्तौ । तेन सन्तुष्टः मयः पाण्डवानां कृते अद्भुतं सभाभवनम् एकं निर्माप्य ददामि इति वचनं दत्तवान् । अग्निदेवः कृष्णाय सुदर्शनचक्रं, पाञ्चजन्यनामकं शङ्खम्, अर्जुनाय गाण्डीवनामकं धनुः, अक्षय्यं तूणीरं, देवदत्तनामकं शङ्खं च दत्तवान् ।

कृष्णः, भीमः, अर्जुनः च वेषान्तरं धृत्वा अतिथिरूपेण गिरिव्रजनगरं प्रविष्टवन्तः ।

तस्मिन् काले बकासुरः, दुर्योधनः, भीमः, कीचकः, जरासन्धः एते समानशक्तिशालिनः आसन् । कृष्णः जानाति स्म यत् एतेषु अन्यतमेन अन्येषां चतुर्णां वधः करिष्यते इति । भीमः पूर्वमेव बकासुरस्य वधं कृतवान् आसीत् । अतः भीमः एव जरासन्धस्य वधं कर्तुं समर्थः इति कृष्णः चिन्तितवान् । अस्त्रेण शस्त्रेण वा तस्य मारणं न शक्यम् आसीत् । परन्तु तस्य शरीरस्य द्वेधा विदारणेन एव तत् शक्यम् आसीत् ।

कृष्णः जरासन्धम् उक्तवान् - "वयं भवतः अतिथयः । अस्मासु अन्यतमेन सह मल्लयुद्धं क्रियताम् । तदेव अस्माकम् आतिथ्यम्" इति ।

जरासन्धः उक्तवान् - "भोः कृष्ण ! भवान् पूर्वम् एव मया पराजितः सन् प्रहर्षणगिरिं प्रति धावितवान् । अर्जुनः तु इतोऽपि दुर्बलः । अतः भीमः एव मया सह युद्धं करोतु" इति ।

भीमजरासन्धयोः मध्ये महत् मल्लयुद्धं संवृत्तम् । तस्मिन् युद्धे भीमः जरासन्धम् अधः पातितवान् । अनन्तरं कृष्णस्य संज्ञानुसारं जरासन्धस्य शरीरं द्वेधा विदार्य भागद्वयं दूरे क्षिप्तवान् । एवं जरासन्धस्य वधः जातः ।

युधिष्ठिरः राजसूययागं कृतवान् । तस्मिन् यागे भीष्मस्य सूचनानुसारं कृष्णस्य अग्रपूजा कृता । तस्यां सभायाम् उपस्थितः शिशुपालः एतत् असहमानः परुषैः वचनैः कृष्णस्य निन्दनम् आरब्धवान् । खड्गं गृहीत्वा कृष्णं पाण्डवान् च मारयितुं सः उद्युक्तः जातः । शिशुपालस्य शतं निन्दनवाक्यानि अपि कृष्णः मौनेन सोढवान् । परन्तु शिशुपालस्य मुखतः यदा अनन्तरवाक्यं निर्गतं तदा क्रुद्धः कृष्णः सुदर्शनचक्रं प्रयुक्तवान् । शिशुपालस्य शिरश्छेदः अभवत् । तदा शिशुपालस्य शरीरे स्थितः जयस्य अंशः बहिः आगत्य कृष्णस्य शरीरे विलीनः अभवत् । एवं जयविजययोः तृतीयं जन्म समाप्तम् । तौ वैकुण्ठं गतवन्तौ ।

मयः पाण्डवानां कृते एकम् अद्भुतं सभाभवनं निर्माप्य दत्तवान् आसीत् । तत् दृष्ट्वा दुर्योधनः आश्चर्यचकितः । तत् द्रष्टुं गतः सः तत्रत्यैः भ्रमजनकैः रचनादिभिः अपमानितः ।



जलं स्थलम् इति सः भ्रान्तिं प्राप्तवान् । तस्य भ्रान्तिं दृष्ट्वा द्रौपदी हसितवती । अनेन दुर्योधनः बहुधा खिन्नः । शकुनिः तं समाश्वस्य उक्तवान् - ''वयम् अपि मार्गान्तरेण पाण्डवानाम् अपमाननं करवाम'' इति । अनन्तरं तस्य सूचनायाः अनुसारम् एव द्यूतप्रसङ्गः संवृत्तः ।

कुचेलः कृष्णस्य बाल्यमित्रम् । कृष्णः बलरामः कुचेलः च बाल्ये सान्दीपनिमहर्षेः गुरुकुले सहाध्यायिनः आसन् ।

कुचेलस्य बहूनि अपत्यानि । सः तु जन्मना एव दरिद्रः । कदाचित् तस्य पत्नी तम् उक्तवती - ''कृष्णस्य समीपं गत्वा साहाय्यं प्रार्थयतु'' इति । 'अस्तु' इति कुचेलः अङ्गीकृतवान् । कृष्णस्य कृते दातुं पत्न्या दत्तं किञ्चित् पृथुकं स्वीकृत्य सः प्रस्थितवान् ।

कुचेलस्य आगमनसमये कृष्णः द्वारकानगरस्य सौधाग्रे अष्टभिः पत्नीभिः सेव्यमानः क्रीडन् आसीत् । कुचेलं दूरतः दृष्ट्वा सः उत्थाय पादाभ्याम् एव तस्य समीपं गतवान् । कुचेलं सः गाढम् आलिङ्गितवान् । तम् आनीय स्वीये सिंहासने उपवेशितवान् ।

कृष्णस्य अष्ट पत्न्यः अपि कुचेलस्य सत्कारं कृतवत्यः । तासां विशेषोपचारेण, कृष्णस्य आदरेण च आनन्दितः कुचेलः आगमनकार्यम् एव विस्मृतवान् । परन्तु कृष्णः तस्य हस्ते विद्यमानं पृथुकस्य स्यूतं दृष्टवान् । सः तं स्यूतं स्वीकृत्य मुष्टिपरिमितं पृथुकं आनन्देन खादितवान् । अवशिष्टान् पृथुकान् पत्नीभ्यः दत्तवान् ।

मित्रस्य कृष्णस्य आतिथ्येन कुचेलः नितरां सन्तुष्टः । सः कृष्णं किमपि साहाय्यं न पृष्टवान् एव । कृष्णस्य सद्गुणान् स्मरन् सः प्रतिनिवृत्तः । परन्तु गृहपरिसरः यदा आसन्नः तदा सः स्वस्य गृहम् अभिज्ञातुं कष्टम् अनुभूतवान् । तस्य गृहम् इदानीं सुवर्णरजतादिना सकलैश्वर्येण च युक्तं बृहत् भवनं जातम् आसीत् । तस्य पत्नीपुत्रादयः सर्वे अपि नूतनानि वस्त्राणि आभरणानि च धृत्वा आनन्देन तस्य प्रतीक्षां कुर्वन्ति स्म । कुत्रापि दारिद्र्यस्य चिह्नम् अपि न आसीत् ।

अनन्तरं ते सर्वे अपि अनुदिनं कृष्णस्य कृपातिशयं स्मरन्तः बहुकालपर्यन्तं सुखेन जीवितवन्तः । दानधर्मादिभिः ते अन्येषां साहाय्यम् अपि कृतवन्तः ।



# विनयस्य पाण्डित्यम्

वेणुशर्मा प्रसिद्धः वैद्यः । सः न केवलं स्वग्रामे, अपि तु परितः स्थितेषु ग्रामेषु अपि प्रसिद्धः एव । तस्य चिकित्सापद्धतिं सर्वेऽपि मुक्तकण्ठं प्रशंसन्ति स्म । कदाचित् सः वैद्यः रोगिणां परीक्षां कृत्वा तेभ्यः स्वास्थ्यसम्बद्धाः सूचनाः दत्त्वा तान् सम्प्रेष्य गृहस्य अन्तः गन्तुम् उद्युक्तः । तावता विंशतिवर्षीयः कश्चन युवकः आगतः । सः वैद्यं विनयपूर्वकं नमस्कृतवान् ।

वेणुशर्मा चिन्तितवान् यत् एषः युवकः केनापि रोगेण पीडितः स्यात् इति । अतः तं विचारयितुं सः उद्युक्तः । तावति काले स युवकः - ''मम नाम विनयः इति । गतेभ्यः आ दशभ्यः वर्षेभ्यः अहं वैद्यानां सेवां कुर्वन् अस्मि । वैद्यसम्बद्धानि शास्त्राणि अपि पठितवान् अस्मि । इदानीं भवतः सेवां कुर्वन् वैद्यः सन् रोगिणां चिकित्सां कर्तुम् इच्छामि । कृपया भवतः अनुमतिः आशिर्वादश्च अपेक्ष्यते'' इति उक्तवान् ।

युवकस्य वचनेन वेणुशर्मा ज्ञातवान् यत् एतस्मिन् युवके विद्यातः अपि गर्वः एव अधिकः इति । अतः सः तं युवकम् उक्तवान् - ''मम सेवां भवान् यदाकदाचिदपि कर्तुम् अर्हति । इदमिदानीं मया काचन वार्ता श्रुता 'शरभनामकः स्वगृहस्य पृष्ठभागे स्थितस्य वृक्षस्य शाखानां कर्तनसमये स्वहस्तमपि कर्तितवान्, तस्य चिकित्सा शीघ्रमेव करणीया इति । वदतु भवान्, इदानीं किं करणीयम् ?'' इति ।

तदा विनयः भीतः सन् - ''सर्वे ग्रन्थाः अतिथिगृहे स्थापिताः । एतादृशी दुर्घटना यदि जायेत तर्हि किं करणीयम् इति चरकग्रन्थे सुश्रुतग्रन्थे वा लिखितं स्यात् । अहं परिशील्य आगच्छामि'' इति वदन् ततः प्रस्थितः ।

तदा वेणुशर्मा तं निरुन्धन् उक्तवान् - ''भवान् चरकसुश्रुतग्रन्थाध्ययनानन्तरं चिकित्सां करिष्यति चेत् तावता शरभः रक्तस्रावेण परलोकं गमिष्यति । अतः भवान् इतोऽपि कश्चित् कालं ग्रन्थानाम् अध्ययने एव गभीरं प्रयासं करोतु'' इति ।





# भगवतः अपि मानवः श्रेष्ठः

रत्नाकरनामकं देशं मणिकण्ठः नाम राजा पालयति स्म । तस्य बुद्धिमत्तया तदीयं राज्यं बहुधा विस्तृतम् अभवत् । बृहत् राज्यम् इति कारणात् देशस्य सर्वेषु भागेषु जनानां सुखदुःखविचारणं कष्टसाध्यं जातम् । अस्याः समस्यायाः परिहारं प्राप्तुं राजा मन्त्रिमण्डलेन सह मन्त्रालोचनं कृतवान् । मन्त्रिणः असूचयन् यत् देशं चतुर्धा विभज्य एकैकस्य भागस्य एकैकः प्रतिनिधिः नियोजनीयः इति । राजा एतां सूचनां सहर्षम् अङ्गीकृतवान् ।

ततः राज्ञा चत्वारः राजप्रतिनिधयः नियुक्ताः । प्रतिमासं स्वस्य विभागे स्थितानां जनानां समस्याः, तदर्थं कृतान् परिहारान् च राजप्रतिनिधयः राजानं निवेदयेयुः इति नियमः कृतः । राजप्रतिनिधयः तथैव कुर्वन्ति स्म अपि ।

प्रतिनिधयः सर्वेऽपि राज्ञः विषये यद्यपि श्रद्धायुक्ताः, भक्तियुक्ताः च आसन्, तथापि कासाञ्चन समस्यानाम् उद्भवस्य ते एव कारणीभूताः अपि अभवन् । यतः प्रतिनिधिषु कश्चन स्पर्धामनोभावः उद्भूतः । अन्येषां त्रयाणाम् अपेक्षया मम विभागः एव अधिक-समृद्धियुक्तः भवेत् इति भावना सर्वेषु प्रतिनिधिषु आसीत् । तदर्थं जनेषु उत्साहं वर्धयितुं ते प्रयत्नं कृतवन्तः ।

अनेन परिस्थितिः विभिन्ना जाता । एकस्मिन् भागे यानि फलानि वर्धन्ते स्म तानि अन्यं भागं प्रति न प्रेष्यन्ते स्म । राज्यस्य उत्तरभागे कार्पासवर्धनम् अधिकम् । किन्तु तन्तुवायानाम् आधिक्यं दक्षिणभागे आसीत् । यदा राज्यं समग्रम् एकमेव इति भावना जागर्ति स्म तदा कार्पासम् उत्तरभागतः स्वीकृत्य दक्षिणभागस्य जनाः वयन्ति स्म । किन्तु उत्तर-भागस्य राजप्रतिनिधिः कार्पसप्रेषणं यदा स्थगितवान्, मम विभागे वसन्तः जनाः एव वयनाभ्यासं कुर्वन्तु इति यदा अनुरोधं कृतवान्,

तदा दक्षिणभागस्य प्रतिनिधिः जनान् सूचितवान् यत् भवन्तः अपि कार्पासमेव वर्धयन्तु इति । अस्य परिणामतः, यत्र समर्थाः तन्तुवायाः सन्ति तत्र उत्तमः कार्पासः न प्राप्तः, यत्र उत्तमः कार्पासः अस्ति तत्र योग्याः तन्तुवायाः न प्राप्ताः । अनेन वस्त्राणां स्तरः कुण्ठितः अभवत् ।

एवमेव परिस्थितिः लोहानां विषयेऽपि उत्पन्ना । देशस्य पूर्वभागे उत्तमानां लोहानां खनयः आसन् । किन्तु पश्चिमभागे परिणताः लोहकाराः आसन् । पूर्वभागस्य राजप्रतिनिधिः पश्चिमभागं प्रति लोहानां प्रेषणं स्थगितवान्, स्वस्य प्रदेशे लोहवस्तुनिर्माणप्रशिक्षणं प्राप्तुं व्यवस्थां कृतवान् च । अस्य परिणामः पश्चिमभागेऽपि जातः । लोहानां क्रयणं करणीयम् आपतितं तत्रत्यैः जनैः ।

राजप्रतिनिधिभिः प्रतिमासं स्वग्रामस्य परिस्थितेः विवरणं राज्ञे दीयते स्म । तत् विवरणं सूचयति स्म यत् प्रतिनिधयः यथाशक्ति राष्ट्रोन्नतिं कुर्वन्तः सन्ति इति । किन्तु राज्ञः मनस्तु एतत् अङ्गीकर्तुं न सिद्धम् । किन्तु कुत्र दोषः अस्ति इति तु राज्ञा न ज्ञातम् । पञ्च वर्षाणि अतीतानि । किन्तु देशे उन्नतेः लेशः अपि न दृष्टः ।

अस्य कारणं ज्ञातुं राज्ञा राजधान्याम् अनेकाः गोष्ठ्यः आयोजिताः । एकस्यां गोष्ठ्यां वणिजः भाषणं कुर्वन्तः उक्तवन्तः - ''पञ्चसु वर्षेषु वाणिज्यं बहुधा विस्तृतम्'' इति । तथैव उद्योगपतयः अपि उक्तवन्तः यत् उद्योगावकाशाः पूर्वापेक्षाया अधिकाः सन्ति इति । एवं सर्वेषां भाषणं श्रुत्वा राज्ञः



मनसि चिन्तनम् आगतम् - 'एतेषां वचनेन सन्तोषम् अनुभवानि, उत राज्ये उन्नतिः न दृष्टा इति चिन्तयानि' इति ।

अतः राज्ञा कदाचित् पण्डितानां गोष्ठी आयोजिता । तस्यां गोष्ठ्यां शशिभूषणनामकः कश्चन पण्डितः स्वस्य पाण्डित्यं प्रदर्श्य राज्ञः सत्कारं प्राप्तवान् ।

सत्कारं कृतवान् राजा शशिभूषणं पृष्टवान् - ''महोदय ! अहं भवतः पाण्डित्यसम्बन्धिप्रश्नान् न पृच्छामि । किन्तु बहुभ्यः दिनेभ्यः काचन समस्या मां बाधते ! तस्याः समाधानं भवता वक्तुं शक्यते किम् ?'' इति ।

''पृच्छतु महाराज ! योग्यतानुगुणम् उत्तरं दातुं प्रयतिष्ये'' इति उक्तवान् शशिभूषणः ।

''अस्य जगतः सृष्टिकर्ता परमेश्वरः । अतः एव वयं सर्वे तमेव महामहिमान्वितं भावयामः ।

किन्तु परमेश्वरापेक्षया कोऽपि अधिक-महिमान्वितः अस्ति किम् ?'' इति राज्ञा पृष्टम् ।

''महाराज ! भगवतः अपेक्षया अधिक-महिम्ना युक्तः मानवः एव'' इति झटिति उत्तरं दत्तवान् शशिभूषणः ।

तदा राजा आश्चर्यचकितः सन् उक्तवान् - ''एतेन उत्तरेण भवतः दायित्वं समाप्तं न भविष्यति । तत् कथमिति साधनीयम्'' इति ।

शशिभूषणः सविनयम् उक्तवान् - ''मया एवं यत् उक्तं तस्य कारणं मम अनुभवः एव । महाराज ! मम ललाटे परमेश्वरः पण्डितत्वं लिखितवान् । तदनुगुणम् अहं पण्डितो भूत्वा उत्तरभागे शिक्षकस्थाने नियुक्तः सन् पाठयन् आसम् । किन्तु मम जन्मस्थानम् पूर्वभागे अस्ति इति कारणात् तस्मात् उद्योगात् अहं च्यवितः । अतः मया यस्यां विद्यायां पाण्डित्यं प्राप्तं तस्याः पाठनात् विमुखता प्राप्ता । इदानीं कृषिं कुर्वन् अहं मम उपजीविकां निर्वहन् अस्मि । भगवता मम ललाटे यत् लिखितं तत् मानवेन बलात् परिमृष्टम् । अतः इदानीं भवता एव ज्ञातं स्यात् यत् उभयोः मध्ये कः श्रेष्ठः इति'' इति ।

शशिभूषणस्य वचनेन राज्ञः ज्ञानोदयः अभवत् । यत् राज्यं ऐक्यरूपेण आसीत् तत् चतुर्धा विभक्तम् इत्यतः एव एतत्सर्वं प्रवर्त-मानम् अस्ति इति निर्णीतं तेन । सः पुनः मन्त्रिपरिषदम् आयोजितवान् । प्रमुखैः सह चर्चा अपि कृता ।

मन्त्रिणः अस्मिन् विषये गभीरं विचिन्त्य उक्तवन्तः - ''महाराज ! बृहत् राज्यं कार्य-करणार्थं यत् चतुर्धा विभक्तं तत्र कोऽपि दोषः नास्ति । किन्तु प्रत्येकताभावना जनेषु या उत्पन्ना अत्र कारणीभूताः सन्ति राजप्रति-निधयः एव । यदि प्रतिनिधिः अन्यप्रदेशस्य अभविष्यत् तर्हि एषा स्थितिः न अभविष्यत् एव । अतः प्रतिनिधीनां स्थानानि अवश्यं परिवर्तनीयानि । तदा विभागेषु स्थिता स्पर्धा दूरीभविष्यति । जनानां मध्ये परस्परं सहाय-भावना अपि उत्पत्स्यते'' इति ।

राज्ञा मन्त्रिणां सूचनानुगुणं देशे परिवर्तनम् आनीतम् । तेन देशस्य उन्नतिः साध्या अभवत् ।



२१

# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

जयनगरे प्राचीनस्थले कनकदुर्गाप्रतिमा प्राप्ता । नूतने मन्दिरे प्रतिष्ठापनाय सन्नाहः आरब्धः । प्रतिमायाः स्वर्णमयत्वं ज्ञात्वा वीरसिंहः तां वशीकर्तुम् ऐच्छत् । जब्बरसिंहः ससैन्यः सुखदेवस्य भवनम् आक्रान्तवान् । रक्तपातम् अनिच्छन् सुखदेवः प्रतिमायाः नयनम् अनुमतवान् । यदा नौकया प्रतिमा नीयमाना आसीत् तदा महान् झञ्झावातः उत्पन्नः । प्रतिमा अकस्मात् अदृश्यतां गता ।

चित्रम् - गान्धि-अय्यः

वीरसिंहः जब्बरसिंहेन सह वार्तालापं यदा कुर्वन् आसीत् तदा ...

महाराज ! अमरसिंहः भवन्तं मेलितुम् इच्छति ।

तम् अन्तः प्रवेशयतु ।

प्रधानः गुप्तचरः तत्र प्रविशति ।

अमरसेन ! किमस्ति कापि विशेषवार्ता ?

महाराज ! स्वर्ण-प्रतिमा ...

कुत्र अस्ति सा ? किं सा प्राप्ता अस्माभिः ?

प्रतिमा पुनरपि सुखदेवस्य समीपम् एव गता अस्ति । श्वः नूतने मन्दिरे तस्याः प्रतिष्ठापनं भविष्यति ।

किं सुखदेवं पराजित्य प्रतिमा आनीता भवता ?

न सम्भवेत् एतत् । वयं मन्दिरं गच्छाम । प्रतिष्ठापनात् पूर्वम् एव तां प्रतिमां वयं बलात् वशीकरवाम । अहं स्वयम् एतदर्थं गमिष्यामि ।


आनन्दपूर्णानां जनानां यात्रा मन्दिरस्य दिशि गच्छति । सुखदेवेन सह जयानन्दमुनिः त्रयः शिष्याः च सन्ति । तेषां पृष्ठतः अङ्गरक्षकैः परिवृतं शिबिकाद्वयम् अस्ति । मन्दिरस्य पुरतः शोभायात्रा स्थगिता भवति ।


एकस्याः शिबिकात् दलपतेः पुत्री सुकन्या अवतरति ।


एकः शिष्यः अपरस्याः शिबिकायाः वस्त्रावरणम् अपनयति ।


सः कनकदुर्गायाः प्रतिमाम् उन्नीय मन्दिरस्य दिशि गच्छति ।


हे देवि, महामाये !
एतस्याः प्रतिष्ठापनस्य अनन्तरं मां वदन्तु । अहम् अनुष्ठानं करिष्यामि ।


अलं साहसेन । प्रतिमायाः प्रतिष्ठापनं न भविष्यति ।


सुखदेव ! भवान् मम सेनापतिम् अवदत् यत् अहं रक्तपातं न इच्छामि इति । प्रतिमां नेतुम् अहं स्वयम् उपस्थितः अस्मि । मम सेना दृष्टा स्यात् खलु । अहं तु सर्वविधतया सज्जीभूय आगतोऽस्मि ।
वीरसिंह ! मम समीपे सेना नास्ति । अहं युद्धं न इच्छामि अपि । वयं सर्वे शान्त्या स्थातुम् इच्छामः ।


कनकदुर्गायाः निमित्तं मन्दिरं निर्मितं भवतु इति तु जनानाम् इच्छा ।
एतस्याः प्रतिष्ठापनाय अहम् अवसरं न ददामि । प्रतिमा मदधीना क्रियताम् । एषा मम आज्ञा ।


का एषा ?
एषा मम पुत्री सुकन्या । पूजायाः आरम्भकर्त्री एषा ।
न । वयं प्रतिमां न दास्यामः ।


वीरसिंहः अश्वात् अवतरति । सः अकस्मात् स्वस्य रणनीतिं परिवर्तयति ।
सुखदेव ! आवां सन्धिं करवाव । प्रतिमा भवत्समीपे एव तिष्ठतु नाम । एषा सुकन्या यथा मदीया भवेत् तथा करोतु ।
भवान् निरर्थकं किमपि प्रलपति वीरसिंह !


वीरसिंहस्य मुखे स्थितः मन्दहासः क्रोधरूपेण परिवृत्तः भवति ।
शान्तिपुरस्य राज्ञीत्वं प्राप्तुमेषः सुवर्णावकाशः भवतः पुत्र्याः । तं न भञ्जयतु ।
भवतः धृष्टता सीमातीता न भवेत् ।

राजा कश्चित् विवाहप्रस्तावम् उपस्थापयति यत् सा धृष्टता न सर्वथा । सुवर्णप्रतिमा आवश्यकी उत पुत्री इति सम्यक् चिन्त्यताम् ।

पितः ! तस्य प्रस्तावः अङ्गीक्रियताम् । प्रतिमा कथमपि रक्षणीया ।

विवादं वर्धमानं दृष्ट्वा कश्चन शिष्यः सुकन्यायाः समीपं गत्वा तस्याः कर्णे किमपि वदति । तदा...

एवं पितरं वदतु तावत् ।

अस्तु, एषाऽहं प्रस्थिता ।

सुकन्या वीरसिंहस्य भीतिज्ञापकानि वचनानि शृणोति ।

एवम् ! सर्वस्मात् वञ्चितः भवितुं सिद्धः भवतु । भवतः न भविष्यति राज्यं, न प्रतिमा, न वा पुत्री ।

सुकन्या पितुः समीपं गच्छति । सुखदेवः मुखं परिवृत्य पश्यति ।

तात ! कृपया मम विवाहप्रस्तावः अङ्गीक्रियताम् । प्रतिमा संरक्ष्यताम् ।

किम् एतत् विचिन्त्य उच्यते भवत्या ?

सुखदेवः आश्चर्यचकितः । 'केन उद्देशेन एतम् अनिष्टप्रस्तावं मम पुत्री अङ्गीकुर्वती अस्ति' इति चिन्तयति सः ।

किम् एतत् वदन्ती अस्ति भवती वत्से !

तात ! मम बलिदानतः जयनगरस्य रक्षा स्यात् । तदहमिच्छामि

स्वसमीपम् आगच्छन्तं मुनिं जयानन्दं तच्छिष्यं कश्चित् च पश्यति सुखदेवः ।

एते किम् इच्छन्ति इति मया ज्ञातव्यम् । किं शिष्यस्य मनसि विशेषयोजना कापि स्यात् ?

अनुवर्तते

मानवनिर्मितं महाद्भुतम्

# कौणार्कीयं सूर्यमन्दिरम्



कोणार्कीयं सूर्यमन्दिरम् (ओरिस्साराज्ये स्थितम्) अस्माकं देशस्य आश्चर्यकरेषु अंशेषु अन्यतमम् । तच्च मन्दिरं पुरीतः ५३ कि.मी.दूरे ईशान्यदिशि अस्ति । एतत् मन्दिरं प्रति गमनाय पुरीतः मार्गः अस्ति । भुवनेश्वरतः अपि अत्र आगन्तुं शक्यम् । चत्वारिंशत्-किलोमीटरात्मकः मार्गः एषः ।

पुर्याः जगन्नाथमन्दिरं 'श्वेतवर्णीयम्' इति उच्यते । सूर्यमन्दिरं च 'कृष्णमन्दिरम्' इति उच्यते । क्रि. श. १२३८-१२६८ काले नरसिंहदेवः (प्रथमः) एतत् मन्दिरं निर्मापितवान् । एतत् मन्दिरं सुविशालम् आसीत् इति तर्क्यते । यतः यः भागः अद्य द्रष्टुं शक्यः तत् तु मन्दिरस्य अग्रभागमात्रम् । तदेव सुविशालम् अस्ति, दूरात् दृश्यते च । अतः मूलमन्दिरम् इतोऽपि सुविशालम् आसीत् इति तु सुस्पष्टम् एव ।

एतस्मिन् मन्दिरे सिंहगजादीनां मूर्तयः सन्ति । एतासां वैशिष्ट्यं नाम तासाम् आकारः । वास्तविकाः सिंहगजादयः येन आकारेण स्युः तेनैव आकारेण एताः निर्मिताः ।

एतादृश्यः मूर्तयः प्रायः अन्यत्र कस्मिंश्चिदपि मन्दिरे न सन्ति एव इति विशेषज्ञाः अभिप्रयन्ति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थं विज्ञानम्

### ह्याम्–आकाशवाणी



यद्यपि विज्ञानक्षेत्रे अस्माभिः महती प्रगतिः साधिता अस्ति, तथापि नैसर्गिकविकोपकाले वयं सम्पर्कसाधनानां निष्क्रियतायाः कारणतः असहायकताम् अनुभवामः । झञ्झावातादिषु प्रसङ्गेषु सम्पर्कसाधनानां निष्क्रियतायां जातायां किं वा कर्तुं शक्येत ? अत्र सरलः परिहारः नाम 'ह्याम्' । ह्याम्-आकशवाणी जगति स्थितानां ह्याम्वतां सर्वेषां सम्पर्कं साधयितुम् अर्हति क्षणमात्रेण ।

ह्याम्-आकाशवाणी स्वतन्त्रकेन्द्रायते । तरङ्गप्रसारः तरङ्गग्रहणं चापि इतः सम्भवति । अतः गृहे एव आकाशवाणीकेन्द्रं स्थितम् एव भवति । यदि सकृत् ह्याम्यन्त्रं क्रियाशीलं सिद्धं भवति तर्हि तरङ्गाधारेण सन्देशप्रसारः शक्यः भवति । तदवसरे ये ह्याम्सम्पर्कयुक्ताः भवन्ति ते सन्देशं प्राप्तुम् अर्हन्ति । अतः दूरस्थैः सह जल्पनाय एतत् साधनं नितराम् उपकारकम् । सङ्गणकात् अपि एतत् एव अधिकलाभकरम् ।

## भवतां परिसरः

### टैरेण्टुलानामकः ऊर्णनाभः

'टैरेण्टेल्लानृत्य'विषये किं भवद्भिः किमपि श्रुतम् ? एतत् इटलिदेशीयं जानपदं नृत्यम् । मध्ययुगे आसीत् एतत् । 'टैरेण्टुला'नामकस्य महाकारकस्य केशमयस्य ऊर्णनाभस्य नाम्नः सम्बन्धात् एतस्य नृत्यस्य तादृशं नाम । तेन ऊर्णनाभेन दष्टः पुरुषः वेदनया यादृशानि पदानि स्थापयति तादृशानि एव आदिमानि कानिचन पदनिक्षेपणानि भवन्ति एतस्मिन् नृत्ये अपि ।

दक्षिणयुरोपीयाः ऊर्णनाभाः घोरविषमयाः भवन्ति प्रायः । तैः दष्टः जनः 'टैरेण्टिस्म्'-नामकम् अस्वास्थ्यं प्राप्नोति । नितरां दुर्बलतां गतः सः जीवरहितः इव भवति । प्राचीने काले एतस्य चिकित्सा आसीत् सङ्गीतश्रावणमात्रम् । तत् सङ्गीतं शृण्वन् सः ऊर्णनाभेन दष्टः जनः नृत्यन् एव शक्तिह्रासकारणतः मरणम् आसादयति स्म ।

किन्तु अद्य टैरेण्टुलादंशनतः लघुपशवः अन्ये कीटादयः च मरणं प्राप्तुम् अर्हन्ति, न तु मानवः कोऽपि ।



# पुष्टोऽयं भवताम् पुष्टोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### सुपिष्टकेतिहासः



मानवः सुपिष्टकं सेवते केनचित् प्रकारेण आ प्राचीनकालात् अपि । किम् एतत् वचनं भवत्सु आश्चर्यं जनयति ?

ऐदम्प्राथम्येन सुपिष्टकं निर्मितं निष्पिष्टेन सीरीयल्धान्येन । धान्यपिष्टं जलेन मिश्रीकृत्य तत् अग्निना उष्णीकृत्य सुपिष्टकं निर्मान्ति स्म पूर्वजाः ।

एषु दिनेषु तु 'यीस्ट्'नामकं किञ्चन द्रव्यं योजयित्वा सुपिष्टकं निर्मीयते । एतत् यीस्ट् तु सस्यजन्यात् शिलीन्ध्रतः प्राप्यते । एतादृशस्य सुपिष्टकस्य निर्माणस्य क्रमम् ऐदम्प्राथम्येन अनुसृतवन्तः आसन् इजिप्शियन्जनाः । तेभ्यः ग्रीक्जनाः एतं निर्माणक्रमम् अधिगतवन्तः । क्रि.पू. १५० तमे वर्षे ऐदम्प्राथम्येन सुपिष्टकनिर्माणापणः आरब्धः । किन्तु क्रि.पू. ४००० वर्षेभ्यः पूर्वं निर्मितेषु ईजिप्टीयेषु शङ्कुभवनेषु (पिरमिड्) सुपिष्टकं प्राप्तम् अस्ति । ताहितिनामके प्रदेशे 'ब्रेड्फलम्' प्राप्यते, यच्च गन्धेन रुच्या च सुपिष्टकसदृशम् एव अस्ति ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### एतस्य मासस्य प्रश्नाः 'भूगोलम्' अधिकृत्य सन्ति ।

१. पोर्चुगीस्जनाः गोवा-दमन-दीवद्वीपान् इव अन्यान् कान् भारतीय-भूभागान् पालयन्ति स्म ?





२. सः केन्द्रशासितः प्रदेशः कः, यश्च भारतस्य पूर्व-समुद्रतीरे पश्चिमसमुद्रतीरे च अस्ति ?

३. पणजिः कस्य राज्यस्य राजधानी अस्ति ?





४. भारतस्य कस्मिन् भागे भारतीयारबसन्तत्योः मिश्रीभूता सन्ततिः दृश्यते ? तस्याः जातेः नाम किम् ?

(उत्तराणि ७० तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा

**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्र-शीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



NARAYANAMURTHY TATA



NARAYANAMURTHY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ ता: पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका





'मार्च्'मासस्य चित्रशीर्षिकाप्रेषकः -

**गोपालकृष्णः**

'कुन्नितनाड्डुपेरम्बिल्', कनायम् (पो.)

शोरनूरु, पालक्काड्डु - ६७९ १२५

केरलम्

**चिबुकसमर्पितहस्तौ वहतः चिन्ताभावम् ।**
**वादननिपुणावेतौ धरतः श्रद्धाभावम् ।**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. दाद्रां, नगयिहवेलीं च । २. माहे (पाण्डिचेर्याम् अन्तर्भूता)

३. गोवाराज्यस्य । ४. लक्षद्वीपे । मोप्ले इति ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# अवकरः अपि गोभरायते

पुष्पप्रदर्शनकार्यक्रमे सोनियाखन्नावर्यायाः पाटलपुष्पेण प्रथमं पारितोषिकं प्राप्तम् । ताम् अभिनन्दनवचनानि वक्तुं वीणा तन्माता च तस्याः गृहं गतवत्यौ ।



ताम् अभिनन्द्य वीणायाः माता अवदत् - ''भगिनि ! न जाने भवत्याः हस्तगुणः कीदृशः अपूर्वः इति । भवत्या वर्धितस्य यावती उत्कृष्टता न तावती उत्कृष्टता मया वर्धितानां पुष्पाणाम् । महती सेवा कृता चेदपि फलं तु सामान्यं मम'' इति ।

''अत्र किञ्चन रहस्यम् अस्ति । तत् प्रत्यक्षं पश्यतु तावत्'' इति वदन्ती सोनिया वीणां तन्मातरं च उद्यानं नीतवती ।

''अहो ! रमणीयानि डेरियामल्लिकादीनि पुष्पाणि !'' इति सामोदम् उक्तवती वीणा ।

''अनुगृहीताऽस्मि भवत्याः प्रशंसया । वीणे ! पुष्पसस्यानां करण्डके सूक्ष्मदृष्टिं पातयतु तावत्'' इति अवदत् खन्नावर्या ।

तत्र दृष्टिं प्रसार्य वीणा अवदत् - ''हन्त ! पलाण्ड्वावरणानि, अण्डावरणानि ...। किमर्थम् अवकराः अत्र पातिताः ?''

''न अवकराः एते । गोभरम् एतत् । जैविकांशाः ये अस्माभिः क्षिप्यन्ते तेषाम् आधारेण गोभरः निर्मातुं शक्यः । तस्य उपयोगेन सस्यानि वर्धितानि चेत् तानि पुष्टानि हरिद्वर्णीयानि च भवन्ति'' इति वदन्ती खन्नावर्या तां नैसर्गिकगोभरनिर्माणक्रमम् अपि बोधितवती ।

''अपूर्वः विषयः मया अद्य ज्ञातः । अवकरोऽपि गोभरायेत इति अद्यैव ज्ञातं मया'' इति अवदत् वीणा ।

''एतं क्रमम् अहमपि अनुसरिष्यामि । भवत्या उपकृता अस्मि बहुधा'' इति अवदत् वीणायाः माता ।

